श्रीः ।

# पञ्चाक्षरीभाष्यम्

---

श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमहा-
देवाश्रमस्वामीत्यपराभिधानश्रीमदा-
त्मनिरञ्जनस्वामिकृतभाष्यप्रकाशिका-
ख्यतात्पर्यसङ्ग्रहेणोपेतम्

श्रीमन्नन्धर्वनारायणेत्यादिविविधबिरुदावलीविराजमान-
मानोन्नतसत्याप्रतापशालिसलूम्बरनगराधीश-
श्रीमहाराजजोधप्रतापसाहिवीरपुङ्गवैः
मुद्रयित्वा प्रकाशितम् ।

शुभमस्तु ।

---

काश्याम्
"अमर" यन्त्रालये श्रीमदम्बिकाचरण
चट्टोपाध्यायद्वारा मुद्रितम् ।
सन् १८८७ ई०

श्रीगणाधिपतयेनमः ॥



देवेन्द्रादिसमस्तदिक्पतिशिरोराजत्किरीटोल्लसद्-
रत्नोद्दिक्तमयूखजातजनताभट्टारकाङ्घ्रिच्छविः ॥
आस्तां मद्धृदि पर्वतेन्द्रतनयाविश्वेशसौख्याम्बुधि-
प्रोल्लासैकधुरन्धरेन्दुरनिशं ढुण्ढिर्गणानांपतिः॥ १॥
प्रायः प्रयाति समयो विदुषामपीष-
द्व्यापारसक्तमनसां तमसावृतानाम् ॥
नैवावधानलवमप्युपयाति चित्तं
कस्याप्यधीशपदपङ्कजरेणुगन्धे ॥ २ ॥
एवं निरीक्ष्य मनसो वितथा विचारो
रोद्धुं न शक्य इति चेतसि चिन्तयित्वा ॥
वाणीं निजामुपनयामि पुरः परेश-
तादात्म्यवद्व्रतिवरस्य पवित्रवृत्ते ॥ ३ ॥
यस्मिन् परेशधिषणान्न जहाति नित्य-
माबालवृद्धविदविद्गणमेष लोकः ॥

वाचं न मेऽस्य किमु सन्तनुतां पवित्रां
वृत्तं यतिप्रवररामनिरञ्जनस्य ॥ ४ ॥

कौवेर्य्यां काशिकायाः कियदपि धरणीं लङ्घयित्वा
सरस्वा नद्याम्श्चाप्युत्तरस्यां विलसति नगरी हस्ति-
मन्नामधेया ॥ प्रख्याता राजधानी बहुतरसमयादे-
षक्ष्प्याप्रतापो यस्यामद्यापि राजत्यवनिपतिलको
वैरिविध्वंसिवीर्य्यैः ॥ ५ ॥

हथुअेत्यपराभिधानतो
भुवने विश्रुतिमागता चया ॥
अमुना प्रभुणाऽधुनात्यसा-
वति सर्वा नगरीर्विराजते ॥ ६ ॥

कैलासप्रांशुशुद्धे हिमकरदृषदां सारभागावनद्धे
बद्धे वैरिञ्चिशिल्पोपमकृतिनिपुणैर्दोषलेशैरविद्धे ॥
प्रासादे रत्नक्लृप्ते यदुकुलतिलकः सम्बलद्राधिकाङ्ग-
व्यासङ्गोद्दामलीलो व्रज इव नितरां क्रीडते यत्र-
नित्यम् ॥ ७ ॥

प्रान्ते च तस्याः कियदेव दूरे ।
कश्चिद्द्विपश्चिन्मुनिशान्तवृत्तिः ॥

आसीद्विजो रामधनेति नामा ।
कुलोल्लसन्मिश्रपदोपनामा ॥ ८ ॥
वंशोऽयं घृतकौशिकस्य तपसां वाराम्निधेः सन्मुने-
र्जातो वाजसनेयिशाखिनिगमेप्यारण्यके यः श्रुतः॥
एष श्री रघुवीरचिन्तनसरस्स्नानैकहृष्यन्मना
वाल्मीकेः कवितावतारविषये रामायणे सज्जितः९॥
सोऽभ्यलष्यत्कुलेमेऽपि परमात्मा सनातनः ॥
विभूतिं दर्शयेत्स्वीयां पावयेद्या जगत्त्रयम्॥ १०॥
इति चिन्तां समासाद्य तपश्चक्रे स दुष्करम् ॥
मनुं पूर्वर्षिच्छन्देद्यं जजापावहितो द्विजः ॥ ११॥
सोऽजानात्स्वप्नतः पौत्रं परमेशांशसम्भवम् ॥
भविष्यन्तं शास्त्रतत्त्वद्रष्टारं विजितेन्द्रियम्१२॥
किम्वदन्तीयमद्येह श्रूयते वृद्धतः क्वचित् ॥
शान्त्या सम्भावये चैतदीशोजानातु यद्भवेत् १३॥
विद्वद्रामधनस्याथ प्रथमात्पुत्रतोऽभवत् ॥
तनयः सर्वविद्यात्मा वैराग्यैकनिकेतनः ॥ १४ ॥
शान्तिप्रधानया वृत्त्या ऽनुभावात्स्वप्नतश्च सः ॥
पितामहोऽचीकरत्तं नाम्ना रामनिरञ्जनम् ॥ १५ ॥

स जातः शैशवे क्रीडास्थाने शास्त्राण्यधीतवान् ॥
गृहे पितामहात्काश्यां प्राणनाथादितस्तथा॥१६॥
ततः स विद्याः सकला दधानो
वैराग्यभूषापरिभूषितश्च ॥
कामप्यभिख्यां जगदेकभर्त्तु-
र्लेभे शिवस्यैव धरास्थितस्य ॥ १७ ॥
जातो व्याकरणार्णवे स फणिपस्तर्केऽक्षपादोपमः
काणादस्तदुदीरिते च विषये मीमांसने जैमिनिः ।
लेभे कापिच का पि लेपि धिषणाऽनेनाशु योगे तथा
वेदान्ते तु ददर्श तत्सविषयो यत्नैव वाचामपि॥१८॥
एवं स विद्याः सकलाः समाप्य
शुश्रूषया सर्वगुरून् प्रहर्ष्य ॥
ययौ गृहं लब्धवरो गुरुभ्यो
वर्षेऽथ विंशे कियदेव शिष्टे ॥ १९ ॥
स वृद्धपादान् प्रणिपत्य मूर्द्ध्ना
तत्त्वं परं तद्धृदि वीक्षमाणः ॥
अध्यापयामास परः शतानां ।
विद्यार्थिनां वृन्दमशेषशास्त्रम् ॥ २० ॥

समध्यपल्लीनरनायकस्य
सुताविवाहे समुपागतानाम् ॥
त्रिद्वद्वराणां सदसि प्रकृष्टा
दरेण तेनैव नृपेण नीतः ॥ २१ ॥
न प्राणिमात्रस्य कदाप्यवज्ञां
चक्रे स विज्ञः किमु विद्वराणाम् ॥
इति स्वभावान्न स तत्र किञ्चि-
त्प्रवक्तुमैच्छद्गुरुणा समोऽपि ॥ २२ ॥
तथापि राज्ञो महताऽऽग्रहेण
दिदृक्षमाणस्य च तद्विचारम् ॥
स्ववृद्धवर्गस्य च वीक्ष्य चित्त-
मुदीरयामास सरस्वतीं स्वाम् ॥ २३ ॥
लोकाद्वैरिञ्चनाम्नः शशिमुकुटजटाजूटतो वा हि-
माद्रेर्भागीरथ्याः प्रपूरे प्रपतति सम्भूद्य या पुरा
तान्तु लक्ष्मीम् ।
बिभ्रद्वाणीप्रवाहः क्षितिविबुधगुरोस्तत्सदःस्था-
न्समस्तान्विज्ञा नज्ञांश्च चक्रे प्रमुदितमनसश्चित्रव-
त्स्थापितांश्च ॥ २४ ॥

फणीश्वरो वा बृहतांपतिर्वा
साक्षाच्छिवो वा हयवक्त्रको वा ॥
न वा विभूतिः परमादिपुंसः ।
सर्वानतिक्रम्य विराजते वा ॥ २५ ॥
इत्यब्रुवन् सर्वसदस्यवर्य्या
विलोक्य तं पण्डितमण्डलीशम् ॥
न तत्र कश्चिद्बुबुधेऽस्य किञ्चि-
त्प्रत्युक्तिमत्यन्तगभीरवक्तुः ॥ २६ ॥
तोषं परं प्रापदमुष्य पक्षः
पक्षान्तरस्थो विबुधस्तु किञ्चित् ॥
ग्लानिम्बभारास्यगतां तदानी-
म्विचारसुव्यक्तपराजयोत्थाम् ॥ २७ ॥
निरीक्ष्य तं क्लेशमयं द्विजानां
घृणां विवादे मनसा वितेने ॥
रजःप्रधानस्य जनस्य सङ्गे ।
निदानभूते निजसत्त्वभङ्गे ॥ २८ ॥
असूचयित्वैव परं तदानीं
निरस्य सर्वान् परिचारकांश्च ।

धौतार्द्धमात्रेणकृतोत्तरीय-
स्ततः प्रदेशान्निषतः प्रतस्थे ॥ २९ ॥
चलन्नयं छन्ननिजस्वरूपो ।
विरज्य संसारसुखान्नितान्तम् ॥
वनान्तमाश्रित्य निजान्तरस्थं
पुमांसमीक्षेय धियेति बुद्धिः ॥ ३० ॥
प्रापत्किथद्दूरगतश्च पूर्वं
निरूपितायाः किल राजधान्याः ॥
प्रान्तन्तदेकान्तमुपेत्य शान्त-
श्चकार तत्रैव विचारमैशम् ॥ ३१ ॥
निषस्रमेकान्तगतं शिवस्य
ज्योतिस्स्वरूपं प्रविचारयन्तम् ॥
यदृच्छयागत्य ददर्श कश्चि-
न्महानुभावं गिरिशोपमानम् ॥ ३२ ॥
एकेन तेनैव जनेन वृत्त-
मेतद्बहुश्रोत्रमुपेत्य निन्ये ॥
भूयांस एनं परिचिक्युरेव
सावित्रबिम्बंकथमावृतं स्यात् ॥ ३३ ॥

आसीद्यः क्षोणिपालः प्रमथितनिखिलस्वान्यभूपालमालस्तेजोराशिर्विशालः करकलिततडित्कान्तिमद्धस्तबालःशत्रुप्राप्तौ करालो रणधरणिगतश्चण्डकल्पान्तकालःपूर्वं श्रीवीरसेनः शिवपदविलसत्प्रेमभारान्तरालः ॥ ३४ ॥

जातस्तस्यैव वंशे शततमपुरुषः श्रीमहेशाभिधानः साहीतयाख्योपधानो नृपतिपरिवृढो भूपसङ्घप्रधानः ॥ भूतस्तस्मान्महीन्द्रोरिपुदलदमनश्छत्रधार्य्यादिसाहीत्याख्यो धर्म्मैकसारः क्षितितलविलसच्चन्द्रिकाकान्तकीर्त्तिः ॥ ३५ ॥

निरूपयिष्ये वंशन्तु क्रमेणास्य महीपतेः ॥
किन्तु प्रक्रान्तवृत्तान्तं पुरःस्संक्षेपतो ब्रुवे ॥ ३६॥

अयं नृपालोहथुआनगर्य्या
मासीत्तदा सत्वगुणप्रधानः ॥
शुश्राव सूरेर्निजराजधानी ।
समीपमेवागमनं जनेभ्यः ॥ ३७ ॥

निर्वेदमेतस्य निशम्य भूपः ।
स्वयं समागम्य विनीय भूयः ॥

निन्ये स्वकीयां नगरीम्पवित्रां
मेने च तां पुण्यमहोदयञ्च ॥ ३८ ॥
तदातिवृद्धिमत्यासी-
द्राजमाता पतिव्रता ॥
श्रीकाञ्चनकुमारीति
ख्याता कीर्त्तिमती परा ॥ ३९ ॥
सा विनिश्चित्य वैराग्यं
तस्य सत्यं यथोचितम् ॥
तन्माहात्म्यश्रद्दधानं
बहु मेने सुतं निजम् ॥ ४० ॥
अथ क्षितीशस्तमुपेत्य कोविदं
विधाय भूयः प्रणतिं समादरात् ॥
अवस्थितिं तस्य समर्थयन्निजे
पुरे सदातत्प्रणतीच्छुमानसः ॥ ४१ ॥
तदैव सन्यासविधेर्विधित्सक-
श्चकार चित्तन्न कदापि रागयुत् ॥
परन्तु वृद्धान्निजसज्जिताशयान् ।
विचिन्त्य मेने समयप्रतीक्षण म्॥ ४२ ॥

समाप्तकस्यास्य विलोक्य तां धियं
द्विजोपकारं च विभावयन् हृदि ॥
दधौ मनस्तत्र विधातुमासनं
गिरामृभुक्षापि कृतस्तवः सुधीः ॥ ४३ ॥
तस्मिन्मनीषिणि तदा निवसत्यमुष्य
राज्ञो निवासनगरीमनु सर्वदेशात् ॥
त्यक्त्वा गुरून् वहलशिष्यगणास्तदीय-
वाचां विलासलवलाभहृदः समीयुः ॥ ४४ ॥
अन्तेवासिगणास्तदास्य निकटे
यावन्त एवागता
योगक्षेमयुगं नरेशजननी
मातेव तेषां व्यधात् ॥
व्याप्ता प्रान्तमही पुरस्य सकला
शिष्यैः प्रशिष्यैस्तदा
हृष्टं तन्नगरे विदेहनृपते-
रारण्यकाख्यानकम् ॥ ४५ ॥
अचतुर्थाश्रमोऽप्येष
प्राणसञ्चारकारणम् ॥

शुष्कमन्नमदाद्धाङ्गो
न चान्यत्किञ्चिदस्पृशत् ॥ ४६ ॥
हृदिस्थं तस्य वैराग्यं
सर्वाशयमुपागमत् ॥
देहाभिमानो नैवासी-
न्मनुष्ये तत्र हि क्वचित् ॥ ४७ ॥
नानुपासितसन्ध्या वा
नातर्पितसुरादिकाः ॥
नवानर्चितगोविन्दा-
स्तत्रासन्ब्राह्मणास्तदा ॥ ४८ ॥
विद्याभ्यासैकनिरताः ।
शास्त्रतत्वबुभुत्सवः ॥
विद्यार्थिनां चक्रवाला
नास्मरन् स्वगृहस्थितिम् ॥ ४९ ॥
नासीद्देशस्तस्य यः शिष्यवर्गै-
र्व्याप्तो नाभूत्सिन्धुनेमी धरण्याम् ॥
शिष्यश्चासीन् नैव यस्तस्य शालां
गत्वा पारं नाध्यगाच्छास्त्रसिन्धोः ॥ ५० ॥

इत्थं कुर्वन्धर्म्मशिक्षां स तत्र
निन्ये प्रायो विंशतिं वत्सराणाम् ॥
मध्ये मध्ये वृद्धपादान्प्रणन्तुं
गच्छन् गेहं कृत्यमन्यद्विहाय ॥ ५१ ॥
निष्ठां प्राप्तान्वीक्ष्य वृद्धांश्चिरेण
प्राप्तकालं चिन्तितार्थस्य युक्तम् ॥
निर्वेदः स प्रोत्थितस्तीव्रवेगा-
दौदासीन्यं तेन तेने स कृत्ये ॥ ५२ ॥
तस्मिन्काले दैवतो भूमिनाथो
ऽप्यैच्छत्किञ्चिच्छ्रोतुमेतन्मुखाब्जात् ॥
गाथां ब्राह्मीम्वेदमूर्द्ध प्रतिष्ठां
सा हि श्राव्या ब्रह्मवेत्तृग्रणीभ्यः ॥ ५३ ॥
अङ्गीचक्रे सोऽपि तस्याभिलाषा-
त्तत्वं वक्तुं हृद्गतं यच्छ्रुतीनाम् ॥
उक्तेरन्ते यद्वरिष्ये भवद्भ्यो
देयं तत्स्यात्तान्प्रतिश्राव्य चैवम् ॥ ५४ ॥
ततः स वेदान्तगतं रहस्यं
व्याख्यातवान् राजवराय तस्मै ॥

ततोऽर्थयामास जनाधिनाथा-
त्तद्दक्षिणास्थानयुजं महार्थम् ॥ ५५ ॥
पुरीं समागम्य महेश्वरस्य
कार्य्यास्ति सन्न्यासधृतिर्म्मयाशु ॥
कार्यन्न तस्मिन् भवता कथञ्चि-
न्निषेधनं वस्तु वृणेऽहमेतत् ॥ ५६ ॥
श्रुत्वा तस्योक्तिमेतामवनिपरिवृढः
प्रोत्थिताश्चर्य्यभावो
न प्राभूत्तन्निषेधे न च वरणविधौ
तद्गिरा स्तब्धवृत्तिः ॥
चिन्तां कृत्वा तमूचे वृतमिति भगवन् !
किन्तु भिक्षा ममैव
ग्राह्या तत्रेति याचे वरमिममधुना
गृह्यतामार्य्यपादैः ॥ ५७ ॥
ततः स भूमीपतिराजधानी-
न्त्यक्त्वाऽऽजगामाथ पुरीं शिवस्य ॥
आडम्बरं प्राकृतिकं विहाय ।
पर्य्यव्रजत्केवलतत्त्वदृष्टिः ॥ ५८ ॥

पूर्वं नाम्ना कृतः पित्रा
श्रीमान् रामनिरञ्जनः ॥
परिव्रज्याविधेरूर्ध्वं
महादेवाश्रमोऽभवत् ५९
नैवाध्यापनलेशमप्यथ तत-
श्चक्रे यतिः स क्वचि
द्वादं जल्पकथाप्रकर्षमथवा
नादर्शयत्क्वापि च ॥
विद्याकीर्त्तिरथापि तस्य शशभृ-
च्छुभ्रांशखण्डोज्ज्वला
वेलास्तम्भमिलत्समुद्रलहरी-
दोलाधिरोहं व्यधात्॥ ६० ॥
नासीत्कोऽपि धराधिपोऽधिधरणी-
पृष्ठं य एतां तुरी-
मागत्यास्य न दर्शनं विहितवा-
नुद्धारकर्त्तुं धिया ॥
अद्याप्यस्ति न कोपि योऽस्य कथम-
प्युच्चारितान्नामतो

न स्यात्प्रेमभरेण जातपुलक-
श्चेन्नानभिज्ञो नरः ॥ ६१ ॥
सन्न्यासस्य परिग्रहेपि बहव-
श्चक्रुर्मठान् भूरिशः
कश्चित्क्वापि धानाधिपं कथमपि
प्राप्य स्वकाज्ञाकरम् ॥
आवेलावधिभूमिपालविलस-
च्चूडामणीनां महा-
भाभिर्भूषितपादपद्मयुगलोऽ-
प्येष त्वगेहोऽवसत् ॥ ६२ ॥
केचित्तस्य दिने दिने नियमतो
वीक्षां वहन्तोऽभव-
न्केचित्पर्वणि पर्वणि प्रतिहतं
चक्रुर्न्न तद्दर्शनम् ॥
केचित्पुत्रकलत्रवित्तपशुभू-
गेहादिकं दूरत-
स्त्यक्त्वामुष्य पदाब्जचिन्तनमनु
प्रापुर्द्विरेफश्रियम् ॥ ६३ ॥

योगाचारमतानुगाः प्रकटित-
श्रद्धाश्च बौद्धोक्तिषु
चार्वाका अथ शून्यवादनिरताः
साकारवादाश्च ये ॥
नासीत्तेष्वपि कोपि योऽस्य निकटं
प्राप्य प्रमृष्टाश्रयो
न स्याद्वेदपथ प्रवृत्तधिषणः
सद्भद्धिरास्तां पृथक् ॥ ६४ ॥
सान्नयासीं पदवीं श्रितेन गमिता
न्येतेन वराणसी-
मष्टाम्भोधिमितानि यत्तमनसा
वर्षाण्यतर्षाण्यथ ॥
नागद्वयङ्कमहीमिते क्षितिपतेः
श्रीविक्रमस्याब्दके
मार्गे दर्शतिथौ शिवत्वमगम-
त्सच्चिन्मुदात्मप्रभुः ॥ ६५ ॥
येनास्य सेवनमकारि हृदा यतेन
श्रीछत्रधारिहथुआक्षितिनायकेन ॥

प्राप्तं प्रसादपरिवृंहितमस्य येन
तद्वंशमद्य कथयामि महागुणेन ॥ ६६ ॥
पूर्वं य आस धरणौ धनदोपमानो
धन्यानवद्यगुणभून्नृपवीरसेनः ॥
देवालयेऽपि सति वीरगणाधिकारे
न श्लेषमाप खलु पूरणसंख्यया यः ॥ ६७ ॥
तस्मादभूदवनिलोकविभूषणश्रीः
संसारसेन इति सार्थपदार्थभूतः ॥
हंसेन्दुकुन्दधवलां किल यस्य कीर्ति-
र्वेलावनीगततमालततिं चकार ॥ ६८ ॥
जातस्ततो नृपवरस्त्वधिभूमि भोरा-
सेनस्ततोऽप्यवधसेन इति प्रसिद्धः ॥
तत्सूनुरास धरणीश्वररूपसेन-
स्तस्मादजायत स शङ्करसेनभूपः ॥ ६९ ॥
लेभे जनिं भवनसेननृपस्ततोऽस्मा-
द्राजा बभूव जगदीश्वरसेननामा ॥
तस्याऽऽत्मजेऽप्यजनि ठाकुरसेनभूपः
श्रीरुद्रसेननृपतिश्च ततो बभूव ॥ ७० ॥
तस्मादवाप जननं जयरूपसेनो

राजा ततो ऽथ मुनिसेननृपाल आसीत् ॥
सुज्ञानसेननृपतिश्च ततोऽजनिष्ट
श्रीमाँस्ततोऽप्यजनि लक्ष्मणसेनभूपः ॥ ७१ ॥
निर्ब्बाणसेनवसुधेशवरस्ततोऽभू-
देते बभूवुरिह सेनपदान्तसंज्ञाः ॥
पश्चाच्च कश्चिदपि हेतुमुपेत्य सिंह-
शव्दान्तनामलसिताः क्षितिपा उदीयुः ॥ ७२ ॥
श्रीमाञ्जगत्सिंहनृपोऽथ जज्ञे
तस्मादभूच्चामरसिंहभूपः ॥
सिंहोत्तरः श्रीचयनो महीप-
स्ततो भवच्छ्रीभरतादिसिंहः ॥ ७३ ॥
सङ्ग्रामसिंहधरणीश्वर आस तस्मा-
त्तस्मादभूदवनिजानिरनूपसिंहः ॥
अस्यारिमर्द्दिबलमर्द्दनसिंहसूनु-
स्तत्सूनुरास किल भूमिपचेतसिंहः ॥ ७४ ॥
राधासिंहस्ततो जज्ञे तस्माठ्ठाकुरसिंहकः ।
देवीसिंह स्ततोराजा विष्णु सिंहस्ततः परः ॥७५॥
द्वितीयोऽनूपसिंहोथ जातस्तस्मात्क्षितीश्वरः ।
श्रीमान् भूपतिसिंहस्तत्तस्माल्लेभे जनिर्नृपः ॥७६

अथाऽभवद्धारिलसिंहभूपः
श्रीनीलकण्ठश्च ततो बभूव ।
जातश्च तस्माज्जयदेवसिंह-
स्तस्मादभूच्छ्रीबलभद्रसिंहः ॥ ७७ ॥
आविर्भावमतोऽधरद्धरणिपा-
च्छ्रीकर्णसिंहो नृपो
जातश्चाप्यत उग्रसिंहनृपति-
स्तस्माच्च भूपोऽचलः ॥
शोभासिंह इतीरितोऽ-
थ नृपतिर्जज्ञेऽवधेशस्ततो
राज्ञोऽस्मात्कनकोपमोऽथ कनकः
कान्त्या कलावान्नृपः ॥ ७८ ॥
भारासिंहो ऽथ भूपालः सुखरामाभिधस्ततः ।
भक्तसिंहस्ततो जज्ञे देवकीसिंहकस्ततः ॥ ७९॥
तस्मादभूद्धवलसिंह इति प्रसिद्धः
श्रीरत्नसिंहनरपालक आस पश्चात् ।
राजा निहाल इति विश्रुतमोऽथ जात-
स्तस्मादभूच्च भुवि पत्तनसिंहभूपः ॥ ८० ॥
तस्मादजायत च मन्दिरसिंहभूपो

गोपालसिंहनरपालवरश्च पश्चात् ॥
भूपालसिंहमनुजेशवरस्ततोऽभू-
च्छ्रीखड्गसिंहनृपरत्नमजीजनत्सः ॥ ८१ ॥
इच्छासिंहोऽथ संजातः प्रजानामनुरञ्जकः ॥
तस्मात्कुवेरसिंहोऽभूत्तस्माद्वदनसिंहकः ॥ ८२ ॥
तस्मादभूदवनिपालकहेमसिंहो
जातस्ततस्तु धरणीशगुरुप्रसादः ॥
प्रादुर्बभूव नरनाथवराच्च तस्मात्
संसारसिंह इतिनामलसन्नरेशः ॥ ८३ ॥
बैजूसिंहस्ततो जातो नीलसिंहस्ततोऽभवत् ॥
स्वरूपसिंहस्तत्सूनुर्बलवाँस्तत्सुतोऽभवत् ॥८४॥
बैजूसिंहमसूत सोऽपि नृपतिः
श्रीनीलसिंहस्ततः
सूतस्तेन सुरूपसिंहधरणी-
पालः सदाचारभूः ॥
तत्पुत्रो बलवन्तसिंह उदितो
ऽथोद्धारसिंहस्ततो
वंशोसिंह इतीरितश्च नृपति-
स्तस्मादवापज्जनिम् ॥ ८५ ॥

तस्माद्दीप धराधिपाच्छुभजनुः
श्रीवालसिंहो नृपो
जज्ञे राव्वलसिंहराजतिलकः
श्रीपुष्करस्तत्सुतः ॥
श्रीसत्युत्तरभूमिपोऽस्य तनुजः
श्रीचेतसिंहस्तत-
स्तस्माच्छ्रीशिवनाथसिंहवसुधा-
नाथोऽधिजज्ञे कृती ॥ ८६ ॥
द्वितीयोऽचलसिंहोऽस्मादस्मात्कुञ्जरसिंहकः ॥
ततो नीलधरः प्रोक्तो दाऊसिंहस्ततोऽभवत् ८७
राजा पृथ्वीपाल-
स्तस्मात्तस्मान्मनोहरणसिंहः ॥
तस्माद्भूतो भूपो
विश्रुत्याख्योऽत्यसह्यबलवीर्यः ॥ ८८ ॥
तत आस स चन्दनसिंहमही-
भृद्भूदथ केसरिसिंहनृपः ॥
नरनाथवरोज्झितभूमिसुरो
प्यजनिष्ट सुभावपदश्च ततः ॥ ८९ ॥
अथाऽभवल्लोहितसिंहनामा

राजा प्रजाचक्रचकोरचन्द्रः ॥
श्रीरूपनारायणसिंह आसीत्
ततस्ततोऽभूत्किल सूर्यसिंहः ॥ १० ॥
जयमल्लोऽथ विजज्ञे
राजा तस्मात्प्रतापमल्लोऽभूत् ॥
गुणवान् गुलाबमल्लो
भूपो भूयो बभूव तज्जातः ॥ ११ ॥
तस्मात् कल्याणमल्लो नरपतितिलकः
क्षेमकर्णस्ततोऽभूद्
विश्वत्साहीत्युपाख्यामथ धरणिपति-
र्भूपतीत्याख्य आसीत् ॥
शूरः सङ्ग्रामसाही रिपुगणदलन-
स्तत्सुतोऽथास्य सूनु-
र्देवो देवोपमानः कुलकमलरवी
रुद्रसाही बभूव ॥ १२ ॥
गन्धर्वसाही च ततो विजज्ञे
हमीरसाहीत्यपराभिधानः ॥
अलब्धपुत्रश्च स भूमिपालो
ऽभ्यषेचयत्स्वीयपदेऽनुजं स्वम् ॥ १३ ॥

सोऽयन्त्रिभुवनसाही

चक्रे राज्यं चिराद्थास्याऽभूत् ॥

धीमान् हलधरसाही

ज्येष्ठः पुत्रो महीपालः ॥ १४ ॥

हरगोबिन्दसाही च तत्सुतोभूद्धराधिपः ॥

अप्राप्य तनयं सोऽपि भ्रात्रेराज्यं ददौ स्वयम् १५

ररक्ष पृथ्वीं युवराजसाही

ततो महाराजपदं प्रपद्य ॥

तदात्मजोऽभूद्थ चेतसाही

भूपस्स चाप्यास तनूजहीनः ॥ १६ ॥

प्राज्यं राज्यमथाप्य तस्य वसुधा-

मापालयत्तत्पितु-

र्भ्राता श्रीकरतालसिंहनृपति-

स्तालोन्नतो मानतः ॥

तस्यापीन्द्रियजिद्बभूव तनुजः

साहीत्युपाख्यालसन्

वीरश्रीः सुषुवे च तेन वशनः

साही निदानं श्रियाः ॥ १७ ॥

तस्मान्महेशदत्तः

साही शब्दोपधानयुग् जज्ञे ॥
पत्नी तस्यासीत्सा
पूर्वोक्ता काञ्चनी देवी ॥ ९८ ॥
तस्यामजायत महेशनरेन्द्रमौलेः
श्रीच्छत्त्रधारिनृपतिर्नृपतिप्रवीरः ॥
विश्वक्षितीशपरिषन्मुकुटोपलाभो
धीमान्विपक्षवरपक्षविघातदक्षः ॥ ९९ ॥
दिग्दन्तिपृष्ठमधिरुह्य यदीयकीर्ति-
र्लब्ध्योदयोदयगिरिस्थसितांशुशोभाम् ॥
क्रोडीकरोत्यकृतकृष्णादलोत्थलोक-
क्लेशा सदोपचितकान्तिविराजिता च ॥ १००॥
स्वाम्यङ्घ्रिवारिजयुगेऽर्पितवारिजादि-
पूजाङ्गचित्ततनुगेहधनेन राज्ञा ॥
साफल्यमापि सकलं जनुषोऽमुनैव
साक्षाच्छिवः कथय कस्य पुरः स्थितः स्यात्॥ १०१
तस्माद्रामसहाय आस बलवा-
नुग्रप्रतापस्ततत-
स्तस्मादास जगन्निरीक्ष्यविभवो
वैरीभपञ्चाननः ॥

श्रीराजेन्द्रप्रतापसाहिन्नृपतिः
कृष्णप्रतापस्ततो
जागर्त्येष नृपालभालतिलकः
सौभाग्यभूः पुत्रवान् ॥ १०२ ॥
आधायाग्नीन् ब्राह्मणद्वारतोऽयं-
सन्तर्प्यैतान्सर्त्विजो भूरिकामैः ॥
प्रापत्तेभ्यः पुत्रमिन्दूपमानं
पुण्येऽह्नग्रेऽभीष्टलाभः करस्थः ॥ १०३ ॥
इष्टाविष्टावस्य राज्ञोऽग्न्यगारे
लोकैर्लोक्या काप्यभिख्या चकासित ॥
इन्द्रः सोमो वायुरन्ये च देवा
विप्रव्याजैर्दृश्यतां यत्र यान्ति ॥ १०४ ॥
चातुर्मास्ये विस्तृते त्वस्य राज्ञः
सम्भारो यः प्रादुरासीत्क्रियान्तं
दृष्ट्वा नूनं राजराजोपि चित्तं
कुर्यात्किञ्चिच्चञ्चरीकायमाणम् ॥ १०५ ॥
तस्य स्नाने स्वर्द्रुशृङ्गार्यसङ्घ-
श्चित्तारूढश्चित्रभावन्तनोति ॥
लोकश्लाघ्यो भूमिपालोपि यस्मिन्

सिम्नासूनां श्लेषमाप्यैव सस्नौ ॥ १०६ ॥

एतद्यशो विततशुक्लवितानभागै-
श्छन्नं विलोक्य गगनं निखिलं नरोऽमी ॥
शोभार्थमेव दधते निजमातपत्रं
न त्वातपस्य विनिवृत्तिविधानबुद्ध्या ॥ १०७ ॥

कीर्त्तिर्न चास्य कथमप्युपमानतार्हा
हंसीमवैमि विपरीतगुणोदयेन ॥
एषा हि दुग्धमयमेव तनोति सर्वं
सा तूत्सुकाऽस्ति पयसोऽपि पयो विभक्तुम्॥१०८

सत्कर्मदेवगुरुभक्तिरमुष्य राज्ञो
लक्ष्मीं बिभर्ति नितरां सुरलोकनद्याः ॥
देहत्रयं सपदि साधु पवित्रयन्ती
संयोजयन्त्यपि तथार्थचतुष्टयेन ॥ १०९ ॥

सत्येव नूतनवयस्यतुलोपभोग-
योग्यश्रियाञ्च परितः समुपागतायाम् ॥
शुक्लेषु कर्मसु रजोविमुखेषु नित्य-
मत्यन्तसक्तहृदयत्वममुष्य हृद्यम् ॥ ११० ॥

गाम्भीर्य्येऽम्बुनिधिर्गरिम्णि गिरिणा
तुल्यः प्रतापे शुचे-

मध्याह्नार्कनिभः सुकीर्त्तिलतिका-

प्रोद्भूतिकन्दाग्रणीः ॥

श्रौतस्मार्त्तविधानकुन्दनिवहे

पूर्णेन्दुरुद्यत्कलः

सानन्दः शरदः शतं विजयतां

कृष्णप्रतापो नृपः ॥ १११ ॥

सोऽयं भूपवरः स्ववंशगुरुभिः

पञ्चाक्षरीभाष्यगां

व्याख्यां चारु कृतां कुतोऽप्यलभत

प्राग्दर्शितैः स्वामिभिः ॥

श्रद्धामात्रवशोऽथ तां बहुमतां

सम्मुद्र्य विद्यामयीं

विद्वद्भ्यः प्रवितीर्णवान्मुदमियाद्

देतेन विश्वेश्वरः ॥ ११२ ॥

सम्बन्धमारम्भगतं विधाता

निर्वाहकश्चास्य विधेः शिवस्य ॥

करोतु कल्याणतमं स सिद्धौ

नृपालचित्तोपगतः कुमारः ॥ ११३ ॥

॥ श्रीरस्तु शुभम्भूयात् ॥

"नेत्राभ्रोध्यङ्कपृथ्वीमितशरदि शुभे
फाल्गुने फाल्गुनश्रीः
श्रीमत्कृष्णप्रतापक्षितिपतिरकरो-
त्काशिकायां प्रयागम् ॥
तत्कुण्डाग्निप्रधूमं मुहुरयमपिव-
ल्लक्ष्यमेवाब्दकुक्षौ
चन्द्रः किंस्वामृतार्द्रं स्वयमयमसृज-
द्दत्कलंकायतेत्र ॥ १ ॥
वर्षेऽस्मिन्कलिकालकेलिकलिते
प्यासीद्विवाद्धे युगे
वर्षा तत्र निदानमस्य धरणी-
पालस्य यागाहुतिः ॥
इत्येषा रघुवीरपण्डितकवे-
रुक्तिर्न युक्तिच्युता
लोकानां निगमागमादिकथितं
प्रामाणिकं चेन्मतम् ॥ २ ॥"



श्रीगणेशायनमः ॥

नमो रुद्राय देवाय स्वतंत्रायाखिलात्मने ॥
प्रधानपुरुषेशाय जगत्सर्गादिहेतवे ॥ १ ॥
या विभाति सदा साक्षिस्वरूपेण स्वभावतः ॥
तान्नमाम्यादरेणैव शिवामानन्ददायिनीम् ॥ २ ॥
विश्वनाथपदाम्भोजनखचन्द्रमरीचयः ॥
सद्गुरिष्णोस्तमस्यन्धे मम सन्त्ववलम्बनम् ॥ ३ ॥
विश्वेशं सच्चिदानन्दं परं ब्रह्म सदाशिवम् ॥
नमस्कृत्य हरं साम्बं कुर्वे भाष्यप्रकाशिकाम्॥४॥
मुमुक्षूणामनुष्ठेयं विक्षेपविनिवृत्तये ॥
मोक्षंससाधनं वच्मि परपक्षनिरासतः ॥ ५ ॥
यदत्र सौष्ठवं किञ्चित्तद्गुरोरेव मे न हि ॥
यदत्रासौष्ठवं किञ्चित्तन्ममैव गुरोर्न हि ॥ ६ ॥
सत्यज्ञानानन्दात्मकमद्वितीयं ब्रह्मैव शुद्धसत्त्व-
प्रधानमायोपाधिकं सदीश्वरभावं मलिनसत्त्वप्र-
धानाऽविद्योपाधिकं सज् जीवभावं च जगाम ॥

जीवेश्वरावाभासेन करोति माया चाविद्या च स्वयमेव भवतीति तापनीये श्रवणात्तत्र मायाप्रतिबिम्ब ईश्वरस्तां मायां वशीकृत्य सर्वज्ञः सर्वशक्तिश्च जीवानां सर्वेषामभ्युदयापवर्गार्थं संकल्पमात्रेणैव लीलया जगतस्सर्गस्थितिविलयानाचरति ॥

तत्र च ये जीवास्स्वाज्ञारूपश्रुतिस्मृत्युक्तमार्गानतिलंघनेन स्वात्मानं भजंते तेषामनुग्रहायोपासनार्थं शंखचक्रगदाशूलमृगपरशुधरं नीलोत्पलदलकालमेघपूर्णचन्द्रस्फटिकसमानवर्णं आनन्दघनं सर्वाङ्गसुन्दरं मूर्त्तिद्वयं शुद्धसत्त्वमयं बहुलीलास्पदं विष्णुशंकराख्यं स एवेश्वरो जग्राह ॥

तच्च मूर्त्तिद्वयं वैकुण्ठकैलासादिषु भक्तानां हृदये च नित्यं सन्निहितं वर्त्तते तत्र च भगवान्विष्णुः फलत्यागपूर्वकं निरंतरानुष्ठितवेदानुवचनयज्ञदानतपोभिर्विमलीकृतस्वांतानां नित्यानित्यवस्तुविवेकेन तृणीकृतब्रह्मलोकादिभोगानां शमदमादिमतां मुमुक्षूणां बहुविधस्व-

निश्वासभूतवेदार्थविचारासमर्थानां पुरुषाणां मोक्षसाधनीभूतब्रह्मात्मतत्त्वबोधनाय स्वांशेन श्रीभगवद्बादरायणरूपेणाऽवतीर्णो बहुविधन्यायोपेतैरध्यायचतुष्टयात्मकैर्ब्रह्मसूत्रैः सकलवेदांतवाक्यानि संग्रंथयामास ॥

तानि च सूत्राणि अतिगंभिरार्थतया दुरवगमाभिप्रायाणि संति ॥

इदानीं कलौ दुष्टचित्तैर्भेदवादिभिर्भेदाभेदवादिभिश्च कैश्चिदन्यथाऽन्यथा योजितानि पुरुषार्थपर्य्यवसायीनि न बभूवुः ॥

अथ भगवान्परमेश्वरः सर्वज्ञः शंकरः करुणया लोकानुग्रहार्थं स्वांशेन श्रीसर्वज्ञभगवत्पादशङ्कराचार्य्यरूपेण ब्रह्मादंशैः शिष्यभूतैः सहावतीर्य्य ब्रह्मसूत्रव्याख्यानरूपश्रीमच्छारीरकभाष्यकरणेन सकृच्छ्रवण मात्रेण अविद्यातिमिरतिरस्कारपटीयसो मुख्याधिकारिणः पुरुषधौरेयाननुजग्राह ॥

अथ भगवान् परमेश्वरः सर्वज्ञः करुणानिधिः

सकलभूतपतिः श्रीब्रह्मा श्रीमच्छारीरकभाष्यमतिगंभीरार्थतया दुरवगममभिसंलक्ष्य करुणया लोकानुग्रहार्थं स्वांशेन श्रीसर्वज्ञभगवत्पादपद्माचार्य्यरूपेण अवतीर्य्य श्रीमच्छारीरकभाष्यव्याख्यानरूपश्रीमत्पञ्चपादिकानामवार्त्तिककरणेन मध्यमाधिकारिणो नुजग्राह ॥

अथेदानीं पञ्चपादिकामीमांसाऽसमर्थानलसाननायासेन झटिति ब्रह्मतत्त्वं साक्षाच्चिकीर्षतो मन्दाधिकारिणोऽनुग्रहीतुकामः श्रीभगवान् श्रीमत्पंचपादिकाकारस्तेषां ब्रह्मतत्त्वं करतलबिल्वफलीकारयितुं जपमात्रेण सकलपुरुषार्थसाधकं सर्ववेदांतसारभूतं दिव्यमंत्रराजश्रीपञ्चाक्षरीमहामंत्रं श्रवणमननिदिध्यासनात्मकमारोपितसकलाधिष्ठानतया सर्वात्मकत्वेन अनंतकल्याणगुणतया वस्तुतो निर्विशेषचिन्मात्रस्वरूपतया च कीर्त्तयिष्यन् श्लोकानां त्रयोविंशत्या भाष्यरूपया व्याचष्टे ॥ ० ॥

त्यागोहीति ॥

यद्वा नन्विदंकारास्पदेभ्योऽनात्मभ्योऽविवेकेनाहं-कारास्पदमात्मानं सर्व्वलोकोऽहमस्मीति प्रत्ये-ति दुःखं चानुभवति तेनज्ञातज्ञापकत्वा न्निः-प्रयोजनत्वाच्चात्मतत्त्वप्रतिपादनं व्यर्थमिति चे-न्न चिद्भास्यत्वेन लक्षणेनेदं कारास्पदानामपि-देहेन्द्रियप्राणमनसां प्रतिभासतोऽहंकारास्पद-त्वेन तदविवेकात्तेन च शुद्धेप्यात्मनि दुःखित्वा द्यभिमानात् शास्त्रीयेण च व्रह्मात्मैक्यज्ञानेन

॥ श्रीगणेशाय नमः ॥

त्यागो हि नमसो वाच्य
आनन्दः प्रकृतेस्तथा ॥
फलम्प्रत्ययवाच्यं स्यात्
त्याज्यं पत्रफलादिकम् ॥ १ ॥

समूलस्य तस्य निवृत्तेस्तस्मादज्ञातज्ञापकत्वा-त्सप्रयोजनत्वाच्चात्मतत्त्वप्रतिपादनं न व्यर्थन्त-स्य चात्मतत्त्वस्य तत्त्वमस्यहं व्रह्मास्मीत्यादिवे-दांतमहावाक्यमेवप्रमापकम् वाक्यं च पदार्थज्ञा-

नद्वारेणैव बोधकमिति तत्त्वं पदार्थयोः प्रकृत-
वाक्यार्थानुकूलयोरन्यतोऽसिद्धत्वान्नावपि शा-
स्त्रेणैव प्रमातव्यौ यूपाहवनीयादिवत् ततश्च य-
तो वा इमानि भूतानि जायंते येन जातानि जी-
वंति यत्प्रयंत्यभिसंविशंति इत्यादिसृष्ट्यादिश्रु-
तयस्तत्पदवाच्यार्थस्य समर्प्पिकाः सत्यं ज्ञानम-
नन्तं ब्रह्मेत्यादयस्तु लक्ष्यस्य एवं तद्यथा महा-
मत्स्य उभे कूलेनुसंचरति पूर्वं चापरं चैवमेवायं
पुरुष एतावुभावनुसंचरति स्वप्नान्तंच बुद्धांतं चे-
त्याद्या बृहदारण्यके चतुर्थे प्रपाठके जाग्रत्स्वप्न-
सुषुप्त्यादिश्रुतयस्त्वंपदवाच्यार्थस्य समर्प्पिकाः
योयं विज्ञानमयः प्राणेषु हृद्यंतर्ज्योतिः पुरुषः॥
नहि दृष्टेर्द्रष्टारं पश्येदित्यादयस्तु लक्ष्यस्य तेन-
प्रथममवांतरवाक्येभ्योऽनुभूतयोः शुद्धजीवब्रह्म-
णोस्तत्त्वमस्यादिवाक्ये मुख्यार्थान्वयानुपपत्ते-
र्लक्षणया च स्मरणोपपत्तिः सुषुप्तौ निर्विकल्पक-
साक्षिचैतन्यानुभवांगीकारश्च अद्वितीयब्रह्मवि-
जिज्ञापयिषया प्रवृत्तानां सत्यज्ञानादिपदाना-

मुपाधिविशिष्टचैतन्ये शक्तत्वेऽपि चैतन्यमात्रे तात्पर्य्येण तत्रैवांशे संस्कारोद्बोधाच्च इच्छंति ह्याकाशादिपदादपि निर्विकल्पकं तात्पर्य्याधीनत्वाच्छब्दप्रवृत्तेः ॥ एतेन प्रमितिप्रमात्रोर्महावाक्यार्थबोधेभानमपास्तं असंप्रज्ञातसमाधेः श्रुतिस्मृतिसिद्धत्वाच्चेति पारोक्ष्यसद्वयत्वाभ्यां च तत्त्वंपदार्थमात्रानुभवादेवन कृतकृत्यतावाच्यार्थभेदावभासान्न पौनरुक्त्यं लक्ष्यार्थस्य चैकत्वादखण्डार्थता पदजन्यस्य स्मरणस्य निर्विकल्पकवाक्यार्थानुकूलस्य निर्विकल्पकत्वमनुभवादेवाविरुद्धं सविकल्पकवाक्यार्थबोधे सविकल्पकपदार्थोपस्थितिरंगं निर्विकल्पकवाक्यार्थबोधे च निर्विकल्पकपदार्थोपस्थितिरंगं प्रकृते च निर्विकल्पको वाक्यार्थबोधः तस्यैव प्रमात्वेनाज्ञाननिवृत्तिसामर्थ्यात् ॥ अतो न लक्ष्यतावच्छेदकमन्तरेण लक्षणानुपपत्तिः ॥ प्रकृतवाक्यार्थबोधा नुकूलपदार्थोपस्थितेरेवशक्तिलक्षणासाध्यत्वात् ॥ ननु तर्हि वेदान्तमहावाक्येभ्य

एवपदार्थोपस्थितौ वाक्यार्थबोधे सति तस्य स्वत एव प्रामाण्यात्तेनाज्ञानतत्कार्य्यनिवृत्त्युपपत्तौ किं विचारेणेति चेत्सत्यं वेदांतायद्यपि स्वतः प्रामाण्यान्निर्विकल्पकमात्मसाक्षात्कारं जनयन्ति तथापि तस्य मन्दबुद्धीनां बादिविप्रतिपत्तिजसंशयप्रतिबंधेनाज्ञाननाशकत्वासामर्थ्याद्विचारेण तु संशयनिवृत्तौ निरपबादमज्ञानादिनिवृत्तिरिति संशयबीजभूतबादिविप्रतिपत्तिनिराकरणार्थं विचार आरभ्यते तत्र त्वंपदार्थे प्रथमं विप्रतिपत्तयः प्रदर्श्यन्ते तत्पदार्थस्य शास्त्रतात्पर्य्यविषयतयाभ्यर्हितत्वेपि त्वंपदार्थस्यशास्त्रजन्यमोक्षफलभागितया ततोप्यभ्यर्हितत्वात् ॥ तत्र देहाकारपरिणतानि चत्वारि भूतान्येव त्वंदार्थ इति चार्वाकाः ॥ चक्षुरादीनि प्रत्येकमित्यपरे ॥ मिलितानीत्यन्ये ॥ मन इत्यन्ये ॥ क्षणिकविज्ञानमिति सौगताः ॥ शून्य ॥ मितिमाध्यमिकाः ॥ देहेन्द्रियातिरिक्तो देहपरिमाण इति दिगम्बराः ॥ कर्त्ता भोक्ता ज-

द्रो विभुरिति वैशेषिकतार्किकप्राभाकराः ।
जडबोधात्मक इति भाट्टाः ॥
भोक्तैव केवलबोधात्मक इति सांख्याः पातञ्जलाश्च।
अविद्यया कर्तृत्वादिभाक् परमार्थतो निर्द्धर्म्म
कः परमानन्दबोध एवेत्यौपनिषदाः ॥
एवं सामान्यतोऽहंप्रत्ययसिद्धे चिदात्मनि वादि
विप्रतिपत्तिभिः संदिग्धेऽहं प्रत्ययस्यालम्बनवि-
शेषनिर्णयायाह भगवानाचार्य्यस्त्वयोगोहीति ॥
यद्वा एवं वादिविप्रतिपत्तिनिराकरणपूर्वकं त्वंप-
दार्थो निर्द्धारितः ॥ संप्रति तत्पदार्थस्तथैव नि-
र्द्धारणीयः ॥ तदर्थं निराकार्य्या वादिविप्रपत्तयः
प्रदर्श्यन्ते ॥ ननु नब्रह्मणा सह जीवस्यैक्यम
भ्युपपद्यतेब्रह्मणः सद्भावस्यैवाभावात् ॥ तथाहि ॥
सच्छब्दवाच्यं जगत्कारणं ब्रह्म सदेव सोम्येदमग्र
आसीदित्यादिवाक्येन प्रतिपादितम् ॥ जग-
त्कारणं तु प्रधानमचेतनमितिसांख्याः ॥
पशुपतिरेव जगत्कारणं सचेतनोपि जीवात् भि-
न्नस्तदुपास्य एवेति पाशुपताः ॥

भगवान्वासुदेव एव ईश्वरो जगत्कारणं तस्मादुत्पद्यते संकर्षणाख्यो जीवस्तस्मान्मनः प्रद्युम्नस्ततोऽहंकारो निरुद्धस्तेन कार्य्यत्वाज्जीवस्य तेन सह ब्रह्मणो वासुदेवस्यात्यन्तभेद इति पाञ्चरात्राः ॥

परिणामी नित्यः सर्वज्ञो भिन्नाभिन्न इति जैनास्त्रिदण्डिनश्च ॥

नास्ति सर्वज्ञताद्युपेतं ब्रह्म आम्नायस्य क्रियापरत्वेन तत्र तात्पर्य्याभावात् किन्तु वाग्धेन्वादिवत्सर्वज्ञत्वादिदृष्ट्या जगत्कारणं परमाण्वादिर्जीवो वोपास्य एवेति मीमांसकाः ।

अस्ति नित्यज्ञानादिमानीश्वरः सर्वज्ञः पृथिव्यादिकार्य्यलिङ्गानुमितः स च जीवाद्भिन्न एवेति तार्किकाः ॥

क्षणिकविज्ञानं सर्वज्ञ इति सौगताः ॥

क्लेशकर्म्मविपाकाशयैरपरामृष्टः पुरुषविशेषो नित्यज्ञानरूपः प्रधानांशसत्त्वगुणप्रतिफलिततया सर्वज्ञः संसारिपुरुषविलक्षण एव ईश्वर

इति पातञ्जलाः ॥

अद्वितीयपरमानन्द एव ब्रह्म तच्च जीवस्य वास्तवं स्वरूपं मायया च सर्वज्ञत्वादिविशिष्टं जगदुपादानं निमित्तं चेत्यौपनिषदाः ॥

एवं वादिविप्रतिपत्तिभिः संदिग्धे तत्पदार्थे चौपनिषद्पक्षपरिशेषेण तन्निर्णयायाह भगवान् ॥

अथ मोक्षे तत्साधने च विप्रतिपद्यन्ते विपश्चितः॥ तत्र लौकायतिकास्तावत्प्राकृतलोकानुसारिणो मनुष्यत्वादिविशिष्टं भूतचतुष्टयसंघात एव चैतन्यं मन्यमाना नानागमपुराणानुमानादिमतान्तरप्रसिद्धमपि देहादिव्यतिरिक्तं चेतनं बन्धमोक्षभागिनमशुद्धबुद्धयोऽपलपन्ति नाप्रत्यक्षं प्रमाणमिति वदन्तः ॥ तत्र कस्यमोक्षं प्रत्याशा ॥

तदेकदेशिनोपि प्रत्येकसमुच्चयाभ्यामिन्द्रियाणि मनः प्राणं वा चेतनमुपगच्छन्तस्तथैव वञ्चकाः ॥

विज्ञानवादिनस्तु क्षणिकविज्ञानस्कन्धं देहेन्द्रियादिव्यतिरिक्तमात्मत्वेन मन्यमानाश्चतु-

विधनैरात्म्यभावनया तस्य सोपप्लवविज्ञानसं-
तानस्यात्यन्तोपरमं वा निरूपप्लवसर्वज्ञसंता-
नान्तर्भावं वा मोक्षमिच्छन्ति ॥

माध्यमिकास्तु शून्यमात्रमात्मानमुपगतान
किञ्चिदपि तत्त्वमस्तीति शून्यभावनाप्रकर्षप-
र्य्यन्तात् तत्त्वज्ञानाच्छून्यभावमेवापवर्ग्गमाहुः॥

आर्हतास्तु देहेन्द्रियादिव्यतिरिक्तं देहपरि-
माणमात्मानमभ्युपगम्य तस्य पुर्य्यष्टककर्म्मा-
ष्टकपरिवेष्टितस्यार्हतशास्त्रोक्तेन तपसात्मैका-
कारसमाधिना परिपाकेन चाष्टविधबन्धप्रध्वं-
सेसति सुखैकता तस्य निरावरणज्ञानस्य सन्त
तोर्ध्वगमनमलोकाकाशगमनं वा मोक्षमाचक्षते॥

पञ्जर भञ्जन इव पञ्जरस्थस्य शुकस्य स्वातं-
त्र्यं इदमेव स्वातंत्र्यं मोक्ष इति सिद्धम् ॥

काणादास्तु देहेन्द्रियादिव्यतिरिक्तं विभुमा-
त्मानं नवविशेषगुणाश्रयं कल्पयन्तो जल्पन्ति ॥
द्रव्यगुणकर्म्मसामान्यविशेषसमवायानां षण्णां
पदार्थानांसाधर्म्यवैधर्म्याभ्यां यत्तत्त्वज्ञानं तत्पू-

र्वकादात्मतत्त्वसाक्षात्काराद्वीश्वरोपासनासहि-
तानांनवानां वैशेषिकगुणानां प्रागभावासहवृ-
त्तिः प्रध्वंस एवात्मकैवल्यमिति ॥

नैयायिकास्तु प्रमाणप्रमेयसंशयप्रयोजन-
दृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवित-
ण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानामुद्देश-
लक्षणपरीक्षाभिरात्मशरीरेन्द्रियार्थबुद्धिमनःप्र-
वृत्तिदोषप्रेत्यभावफलदुःखापवर्गाख्यद्वादशवि-
धप्रमेयनिष्कर्षेणात्मद्वयसाक्षात्कारात् श्रवण-
मननिदिध्यासनपूर्वकात्सवासनमिथ्याज्ञान-
निवृत्तौ तत्कार्य्याणां रागद्वेषमोहानां निवृ-
त्तिस्ततस्तत्कार्य्ययोः प्रवृत्तिपूर्वकयोर्द्धर्माधर्म-
योस्ततः पूर्वार्जितकर्म्मणां कायव्यूहपूर्वकभो-
गेन क्षयाच्छरीरानारम्भस्ततो वाधलक्षणस्यैक-
विंशतिप्रभेददुःखस्यात्यन्तविमोक्षोऽपवर्ग इति
कल्पयंति ॥

अपरेतु ऐकभविकन्यायेनात्मज्ञानमन्तरेणा-
पि निषिद्धकाम्ययोरननुष्ठानान्नित्यनैमित्तिका-

नुष्ठानाच्च नागामिकर्मोत्पादो विद्यमानस्य चो-
पभोगेन क्षयात्सकलकर्मोच्छेदलक्षणमपवर्ग-
माहुः ॥

प्राभाकरा अपि वैदिककर्मानुष्ठानाद्विहि-
तात्मज्ञानपूर्वकाद्देहेन्द्रियादिसंबंधस्य धर्माध-
र्मपरिक्षयनिमित्तमात्यन्तिकोच्छेदलक्षणं मोक्षं
मन्यंते ॥

भाट्टास्तु ज्ञानकर्मसमुच्चयादेवात्मनो जड-
बोधात्मकस्य नित्यज्ञानं नित्यं सुखं चेति ॥
ततश्च विषयविशेषानपेक्षया नित्यज्ञानेन नि-
त्यसुखाभिव्यक्तिरित्याहुः ॥
मानसज्ञानेन नित्यसुखाभिव्यक्तिर्वा दुःखाभाव
एव वा मुक्तिरित्यपितदीयाः ॥

सांख्यास्तु प्रकृतिपुरुषविवेकादनाद्यवि-
वेकन्निवृत्तौ तं पुरुषं प्रतिचरिताधिकारायाः
प्रकृतेः पुनस्तद्भोगार्थाऽप्रवृत्तिरिति त्रिविधदुः-
खस्यैकांतात्यन्तनिरोध एव स्वभावतः केवल-
स्यापि पुरुषस्य कैवल्यमित्याहुः ॥

पातञ्जलास्तु प्रकृतिपुरुषविवेकेनाभ्यासवैरा-ग्यपरिपाकात् यमनियमासनप्राणायामप्रत्या-हारधारणाध्यानसंप्रज्ञातसमाधिपूर्वकात्परमे-श्वरप्रसादजात्पंचविधानां चित्तवृत्तीनां निरोधा-द्देवधर्ममेघशब्दितादसंप्रज्ञातसमाधेः कैवल्यमि-ति कल्पयंति ॥

त्रिदण्डिनस्तु जीवब्रह्मणोर्भेदाभेदमभ्युपे-त्य ज्ञानकर्म्मसमुच्चयाभ्यासादेव कारणात्मके ब्रह्मणि कार्य्यात्मकजीवस्य कर्मवासनासहित-भेदांशनिवृत्तिर्मोक्ष इति वदंति ॥

परमेश्वरप्राप्तिरित्यन्ये ॥ सतरङ्गनिस्तरंगभेदेन समुद्रद्वैविध्यवत्सविकारनिर्विकाररूपेणावस्था-द्वयं ब्रह्मणः परिकल्प्य ज्ञानकर्म्मसमुच्चयाभ्या-सादेव सविकारावस्थापरित्यागेन निर्विकारा-वस्थाप्राप्तिरेव मोक्ष इत्यपरे ॥

पाशुपतास्तु यथोक्तपाशुपतधर्म्माचरणा-त्पशुपतिसमीपगमनमेव पुनरावृत्तिरहितं मोक्ष इत्याहुः ॥

एवं यथोक्तविष्णुभक्तिधर्म्माचरणाद्विष्णु-लोकगम्मनमेवमोक्ष इति वैष्णवा: ॥

पञ्चाग्निविद्याद्युपासनैरर्चिरादिमार्गेण हिरण्य-गर्भप्राप्तिरेव मोक्ष इति हैरण्यगर्भा: ॥

एवमपरेऽपि स्वकपोलकल्पितं श्रुतियुक्ति-विरुद्धमेव बहु कल्पयंति ॥

औपनिषदास्तु भगवतानुगृहीता: निरति-शयानन्दबोधरूप आत्मैवानाद्यविद्यानिवृत्त्यु-पलक्षितो मोक्ष इत्याचक्षते ॥

अविद्यायाश्च सर्वदु:खोपादानत्वात्तन्नि-वृत्त्यात्यन्तिकदु:खनिवृत्तिरप्युपपद्यते तस्य स्वरूपे साधनानपेक्षत्वेपि व्यञ्जकतया वेदान्त-महावाक्यकरणक: तत्स्वरूपसाक्षात्कार एव प्र-तिबंधकचतुष्टयरहित: साधनं मोक्ष इत्युपचर्यंते साधनप्रतिबंधकचतुष्टयं विषयभोगवासनाप्रमा-णगताऽसंभावना प्रमेयगताऽसंभावना विपरीत भावनाचेति तत्र विषयाऽऽसक्ते: श्रवणांगभूता: शमदमादयो निवर्त्तका: प्रमाणगताऽसंभावना-

याः श्रवणं निवर्त्तकं प्रमेयगतासंभावनाया म-
ननं निवर्त्तकं विपरीतभावनायाश्च निदिध्यास-
नं निवर्तकमिति ॥
अतः श्रवणादिसम्पादनेनाऽसम्भवानादिप्रति-
बन्धपरिक्षयाय चतुर्लक्षणी शारीरकमीमांसा
समारंभि भगवता वादरायणेन ॥

मोक्षकामश्चास्यामधिकारी शान्तो दान्त
उपरतस्तितिक्षुः श्रद्धावित्तो भूत्वात्मन्येवात्मानं
पश्येदित्यादि श्रुत्युक्तशमाद्युपबृंहितविधि-
मूलकेऽथातो ब्रह्मजिज्ञासेति सूत्रेऽथशब्देन
शमादिविशिष्टस्य मुमुक्षोरेव सूत्रणात् ॥
तदयं निर्गलितार्थः ॥ शमादिसहिते-
न मुमुक्षुणा गुरुमुपसृत्य मोक्षसाधनब्रह्मात्मै-
क्यसाक्षात्कारप्रतिबन्धाऽसम्भावनादिनिवृत्तये -
चतुर्लक्षणमीमांसया वेदान्तवाक्यविचारः प्रतिब-
न्धनिवृत्तिपर्य्यन्तमावर्त्तनीय इति॥तत्र मोक्षस्व-
रूपं यावद्विशिष्य न निश्चीयते तावत् तत्र कस्य
कामना उदेतु तत्स्वरूपमात्रनिश्चयात्कामना-

यां जातायामपि विचारेण साधनविशेषनिश्चये सत्येव तत्र मुमुक्षोः प्रवृत्तिः सम्भवतीति तत्तद्वाद्यभ्युपगतमुक्तितत्साधनाभासनिरासेन परमार्थसती मुक्तिस्तत्साधनं विचार्य्यावधार्यते ॥

तत्रोपनिषत्पक्षव्यतिरिक्तपक्षेषु न तत्साधनेषु कामनांदतुमर्हति ॥ तत्तद्वाद्यभ्युपगमानां मोक्षप्रकाराणामप्रामाणिकत्वात्प्रमाणविरुद्धत्वाच्च॥ तथाहि चार्वाकनये तावन्मोक्षस्वरूपस्यैवानभ्युपगमात् देहेन्द्रियप्राणमनसां च भौतिकत्वेन विनाशित्वाभ्युपगमात् तेषामेव च स्वरूपतो दुःखरूपत्वात् दुःखहेतुत्वाच्च न तन्निवृत्तिसमये संसारसमये वा दुःखनिवृत्त्यात्मकमोक्षफलभागितावकाशः॥ अत एव सौगतमतमप्यपास्तम् तत्रापि क्षणिकविज्ञानसन्तानस्य सोपप्लवत्वेन सर्वदुःखस्वरूपत्वात् तन्निवृत्तौ च स्वस्यैवाभावात्कस्य मोक्षावकाशः ॥ न ह्यात्मनो नाशः कस्याप्यभिमतो निरुपाधिप्रेमास्पदत्वात् ॥ स्वनाशाद्वरं दुःखितया जीवनम् शून्यवा

दे तु किङ्केन काम्येत कामिनः कालत्रयेप्यस-
त्वात् ॥ आहतपक्षेपि सततोर्ध्वगमनस्यालो-
काकाशावस्थानस्य च क्रियात्वेन विनाशि-
त्वान्ना पुनरावृत्तिलक्षणमोक्षकामनाविषयता-
सुखस्य च मोक्षरूपत्वाभ्युपगमे तस्य जन्य-
त्वे पूर्वोक्त एव दोषः ॥ अजन्यत्वेपि मुक्तसं-
सारिणोरविशेषात्स एव दोषः ॥ ननु नास्तिक-
मतेषु मास्तु मोक्षकामना फलफलिनोर्विना-
शित्वात् ॥ आस्तिकमते तु नास्ति स दोष
इति तत्रोपपद्यत एव सा ॥ तथाहि ॥ देहे-
न्द्रियादिव्यतिरिक्तो नित्यो विभुरात्मेति तावत्
सर्वप्रमाणसिद्धं तत्र प्रत्यक्षं तावत् योऽहं पि-
तरौ वाल्येऽन्वभूवं सोऽहं वार्द्धक्ये प्रणप्तनऽनु-
भवामीति प्रत्यभिज्ञात्मकमनन्यथा सिद्धमबा-
धितं च वाल्यवार्द्धकयोर्देहभेदेप्येकं प्रतिसन्धा-
तारं विषयीकुर्वत् तदतिरिक्तमेव स्थायिनमा-
त्मानं विषयीकरोति तस्य च पूर्वकोटिरहितत्वं
जातस्यास्मिन् जन्मनि किञ्चि प्यननुभूतवतः

स्तनपानाद्यर्थप्रवृत्त्यन्यथानुपपत्त्या तज्जातीयेष्टसाधनतास्मरणतज्जनकसंस्कारतज्जनकानुभवाश्रयत्वनियमेन ततः पूर्वमपि तथैवाभ्युपगमात् पूर्वानुभवसंस्कारस्मरणेच्छादीनांमेकाश्रयाणामेकविषयत्वेन कार्य्यकारणभावनियमात् तथा च पारमर्षं सूत्रमिच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गमिति संघातस्य परार्थत्वाच्च शय्यासनादेर्ह्यचेतनस्य भोग्यस्य भोक्तृर्थत्वं दृष्टम् एवं देहस्यापि भोग्यत्वाऽविशेषाद्भोक्तृर्थत्वम् ॥ यश्च भोक्ता स स्वयमसंहतः स्वार्थएव सिध्यति ॥ अन्यथाऽनवस्थानात् ॥ एवं जडवर्गदृष्टत्वेनापि तत् सिद्धिः ॥ एवं च सदकारणकत्वेनोतरकोटिरहितत्वमपि तस्य विनाशकारणासम्भवाच्च ॥ अविनाशीवारेयमात्मेत्यादिश्रुतिभ्यश्च ॥ एवं प्रत्यक्षानुमानशब्दैस्तस्य नित्यत्वसिद्धेस्तस्य विशेष्यनित्यत्वव्याप्यत्वसावयवत्वमध्यमपरिमाणत्वाऽसम्भवान्निरवयवत्वे निश्चिते पर-

माणुः परममहान् वेति विपर्यये सर्वत्र दृष्टकार्यत्वात्परममहानेवेति निर्णीयते ॥ आकाशवत्सर्वगतश्च नित्य इत्यादिश्रुतिभ्यश्च परमाणुत्वपक्षेपि नित्यत्वसम्भवादापातततो न मुमुक्षानुपपत्तिः विचारनिष्कर्षे तु परममहद्ब्रह्माभिन्नत्वरूपमोक्षासिद्ध्या तदनुपपत्तिं वक्ष्यामः॥ तदेवं सर्वास्तिकसाधारणे देहेन्द्रियातिरिक्ते भोक्तरि बन्धमोक्षभागिनि नित्ये सिद्धे तस्य बुद्धिसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मभावनाख्यान्नवविशेषगुणान् मनस्संयोगजन्यान्मन्यंते वैशेषिकतार्किकप्राभाकराः ॥ नवविशेष गुणोदय एव तस्य संसारो युगपत्तन्निवृत्तिश्च मोक्ष इति ॥ तथा च पारमर्षं सूत्रं दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्ग इति ॥ तस्मादात्यन्तिकदुःखनिवृत्तेरविनाशित्वात् परमपुमर्थत्वाच्चात्र विवेकिनां कामनोपपद्यते इति मैवम् स्वाभाविक धर्माणां धर्मिणि सति समुच्छेदाऽसम्भवात्॥

घटे सति तद्गतयावद्विशेषगुणनिवृत्त्यदर्शना-
त् ॥ तथा चोक्तं वार्त्तिके आत्माकर्त्रादिरूपश्चे-
न्माकाङ्क्षीस्तर्हि मुक्ततां नहि स्वभावोभावानां
व्यावर्त्तेतौष्ण्यवद्रवेरिति ॥ तथा च धर्मिणासहै-
व तेषां निवृत्तिरङ्गीकरणीयेति पूर्वोक्तनैरात्म्य-
वादप्रसङ्गः ॥ तदुक्तं ब्रह्मसिद्धिकारैः ॥ विज्ञाना-
दिविशेषगुणनिवृत्तिलक्षणा च मुक्तिरुच्छेदपक्षा-
न्न भिद्यते न हि सतोप्यात्यन्तिको दर्शनाभावो
ऽभावाद्विशिष्यते कश्च सर्वतः प्रेयस आत्मनो
ऽभावमभिकाङ्क्षेदित्यपुरुषार्थो मोक्षः स्यादिति
सर्वविशेषगुणविनिवृत्तिविशिष्टे चात्मनि प्रमा-
णाभावात् ॥ अज्ञायमानस्य दुःखाभावस्यापु-
मर्थत्वाच्चान्धकारप्रनृत्तसदृशत्वापत्तिः॥ अज्ञाय-
मानस्यापि स्वरूपेण पुमर्थत्वमित्यपि न माना-
भावेन तत्स्वरूपस्यैवासिद्धेरुक्तत्वात् । तत्प्र-
माणत्वाभिमतानामनुमानानामाभासत्वात्॥ अ-
शरीरं वा वसन्तं प्रियाप्रियेन स्पृशत इति श्रु-
तिरेव तत्र मानमिति चेन्न ॥ जीवतोऽपि देहा-

भिमानरहितस्य सुखदुःखसम्बन्धाभावप्रतिपाद-
नपरत्वान्नस्याः नवविशेषगुणरहितावस्था वि-
शेषप्रमापकत्वाभावात्तत्प्रतिपादकपदाभावाच्च
यत्तु न्यायभाष्यकृतोक्तं शान्तः खल्वयं सर्व वि-
प्रयोगः सर्वोपरमोऽपवर्गः वहुत्रकृच्छ्रं घोरं पापकं
लुप्यत इति कश्च बुद्धिमान् सर्वदुःखोच्छेदं सर्व-
दुःखासंविदमपवर्गं न रोचयेदिति तद्यथा मधु
विषसम्पृक्तान्नमनादेयमित्येवं सुखं दुःखानुषक्त-
मनादेयमिति ॥तन्न॥ दुःखाभावस्यापि सुखाङ्गत्वे-
न पुरुषार्थत्वात्स्वतन्त्रपुरुषार्थद्वयकल्पने माना-
भावात् सुखकाले दुःखाभावस्य नियतत्वात् ॥
दुःखाभावकाले च सुषुप्तिप्रलयादौ सुखस्याप्य-
भावान्न सुखस्य दुःखाभावार्थत्वेन पुमर्थत्वस-
म्भावनाव्यभिचारात्॥ अधिकसुखेच्छया त्वल्प-
सुखोपेक्षा युज्यते न तु केवलदुःखाभावायेति
प्रेक्षापूर्वकारिणां पन्थाः अस्तु तर्हि नित्य
सुखाभिव्यक्तिरिति भट्टाचार्य्यमतं तत्र पूर्वोक्तदू-
षणासम्भवात् न विकल्पाऽसहत्वात् नित्यसुख-

मात्मनो भिन्नमभिन्नं वा नाद्यः आत्मन आनन्द-रूपत्वात्तद्भिन्नस्य नित्यसुखस्य दुःखरूपत्वापत्तेः ॥ नान्त्यः ॥ तदभिन्नस्य सुखरूपत्वे आत्मनः सदाप्रादुर्भूतत्वात् बन्धावस्थायां मोक्षापत्तेः अत एवात्माऽभिन्नं तत्सुखमिति परास्तम् ॥ आत्मरूपस्य सर्वदाऽनावृतत्वेन तदभिन्नसुखस्य संसारावस्थायामपि भानप्रसङ्गात् ॥ अनया चानुपपत्त्या नव्यमीमांसकैः केवलदुःखाभाव एव परिगृहीतः स च निराकृत एव आत्मनिवृत्तिमन्तरेण तदाश्रितदुःखनिवृत्त्ययोगात् ॥ भाट्टैः कार्य्यकारणयोस्तादात्म्याभ्युपगमात्समवायिकारणनिवृत्त्यैव लोके कार्य्यनिवृत्तिदर्शनाच्च ॥ अस्तु तर्हि साङ्ख्ययोगमतम् ॥ तत्र त्वसङ्गस्यात्मनो निर्विशेषत्वात् दुःखस्य बुद्धिधर्मत्वाभ्युपगमात् ॥ दुःखसमवायिकारणध्वंसहेतुकदुःखनिवृत्त्यभ्युपगमेऽपि नात्मन उच्छेदसम्भावना स्वप्रकाशत्वाच्च नान्धकारप्रनृत्ततुल्यता न अस्मिन्नपि पक्षे सतो दुःखस्य निरोधाऽसम्भवात् असतो निरोधस्य

चोत्पत्त्यसम्भवात्॥
"नासतो विद्यते भावो नाभावो विद्यते सत इति" स्मृतेः॥ संसारान्मोक्षस्याणुमात्रेणापि विशेषानुपपत्तेरपुरुषार्थत्वं तुल्यमेव वरं वैशेषिकादिमतेऽसतोपि दुःखस्य निरोधः सम्भवत्यसतश्च निरोधस्योत्पत्तिः सम्भवति तदपेक्षयापि तुच्छ एवायं सत्कार्य्यपक्षः॥ तथाचात्मनो दुःखाभावो नाम कश्चिदतिशयो गुणाधानलक्षणो मलक्षालनलक्षणो वा वक्तव्यः॥उभयथापि तस्य ध्रुवमनित्यत्वं उत्पत्त्याप्तिविकृतिसंस्कृतिलक्षणानां चतुर्णामपिक्रियाफलानां विनाशित्वनियमात्॥ मोक्षस्य सर्ववादिभिरविनाशित्वाभ्युपगमात्॥ तदुक्तं वार्त्तिककारैः॥ "उत्पत्तिराप्तिर्विकृतिः संस्कृतिश्च क्रियाफलम्॥ मुक्तिर्विलक्षणैतेभ्यस्तेनेहानर्थको विधिरिति"॥ भाष्यकारैश्च महता प्रबन्धेन प्रतिपादितमेतत् समन्वयाधिकरणे अत एवैकदेशिमतानामप्यनवकाशः॥ भेदाभेदपक्षस्य सर्वप्रमाणविरुद्धत्वात्॥ पार-

मार्थिकभेदस्य निवृत्त्ययोगाच्च ॥ इह च ज्ञानत्वस्य निवर्त्तकतावच्छेदकत्वेन विवक्षितत्वात्स्वप्नगन्धर्वनगरशुक्तिरजतादौ तथा दर्शनात् ॥ तदुक्तं पञ्चपादिकाकृद्भिः ॥ "यतो ज्ञानमज्ञानस्यैव निवर्त्तकमिति" साङ्ख्यादिमतेप्यात्मनो नित्यानुमेयत्वात्तत्साक्षात्कारो न सम्भवत्येव परोक्षज्ञानं त्वद्याप्यस्तीति न तत्साधनं परोक्षस्वभावस्याप्यात्मनो योगजधर्म्म प्रभावात्साक्षात्कार इत्यपि न योगजधर्म्मस्य पदार्थसामर्थ्यानुसारेणैवातिशयहेतुत्वात् तदाहुर्भट्टाचार्य्याः ॥ "यत्राप्यतिशयो दृष्टः स स्वार्थानतिलङ्घनात् ॥ दूरसूक्ष्मादिदृष्टौ स्यान्न रूपे श्रोत्रवृत्तितेति" आस्तां तावदितः परं कृतधियामद्वैतनिष्ठावतां तत्तद्वादिविभीषिकानिरसनैः किङ्कर्णकोलाहलैः ॥

यत्तु प्रस्तुतमद्वितीयपरमानन्दैकतानात्मकं वस्तु प्रत्यगभिन्नमेतदधुना निर्णीयते न्यायतः नन्वौपनिषदपक्षेप्यनुपपत्तिः समाना ॥

तथाहि ॥ अज्ञाते कामनानुदयात् ज्ञाते तत्र कामना वाच्या ॥ तथा च ॥ कथमहेयानुपादेये नित्यसिद्धआत्मनि सा भवतु सिद्धे इच्छाविरहात्संसारावस्थायामपि मोक्षापत्तेश्च ॥ तदुक्तं किञ्च मानाद्विज्ञाताविमुक्तिः काम्यते न च ज्ञातायां त्वात्मनित्यत्वान्नितरां नास्ति कामनेति ॥ न च संसारावस्थायामविद्याऽऽवृत्तत्वाद्विद्यमानोप्यद्वयानन्दो न भासते विद्यया त्वविद्यायां निवृत्तायां स्वप्रकाशत्वादानन्दरूपेण स्वयमेव प्रथत इत्यविद्यानिवृत्तिविशिष्टे कामनेति वाच्यम् अविद्यानिवृत्तेर्दुर्निरूपत्वात् ॥ सोऽविद्यात्मभिन्नातत्स्वरूपा वा आद्ये द्वैतापत्तिरद्वैतश्रुतिव्याकोपश्च द्वितीये पूर्वोक्तदोष इति। अत्रोच्यते न सिद्धत्वमात्रेणात्मनीच्छाविरहः ॥ सिद्धत्वं किं सत्वं वा ज्ञायमानत्वं वा अप्रतिबद्धसाक्षात्कारविषयत्वं वा ॥ नाद्यः ॥ विस्मृतग्रैवेयकप्राप्तौ रज्जुभुजङ्गमनिवृत्तौ च व्यभिचारात् ॥ अत एव न द्वितीयोपि तस्येच्छाप्रयो

जकत्वात् ॥ तृतीयस्तु भवतीच्छापरिपंथी सतु प्रकृते नास्ति असंभावनादिप्रतिबंधात् ॥ अत एव पित्तदूषितरसनस्य सितमश्नतो मधुरत्वेन तां जानतोपि न माधुर्य्यनिमित्तत्प्रिविशेषोत्पत्तिः ॥ पित्तदोषेण माधुर्य्यसाक्षात्काराभावात् ॥ तथा च द्विविधमिष्टं वस्तुतोऽप्राप्तं ग्रामादि प्राप्तमपि भ्रमव्यवहितं कंठचामीकरादि एवं परिहार्य्यमपि द्विविधं वस्तुतोऽपहृतं गर्तादि सर्वदापरिहृतं रज्जु भुजङ्गादिभ्रममात्रादपरिहृतमिव तत्राद्ययोः क्रियावधानौ प्राप्तिपरिहारौ द्वितीययोस्तु साक्षात्कारमात्रसाध्यौ अत्रैव परमपुमर्थत्वं मन्यते क्रियाव्यवधानाभावात् ॥ तथा च परमानन्दप्राप्त्यऽविद्यानिवृत्योरपि भ्रमव्यवहितत्वादसिद्धस्वप्रत्यये कामनाविषयत्वमुपपद्यत एव तदुक्तं वार्तिके "न युक्तं कामना मुक्तौ पुंसां नास्तीति भाषितुं देशकालानवच्छिन्नसुखादर्थित्वदर्शनादिति"। आत्मत्वेन सिद्धत्वेपि निरतिशयसुखत्वेनासिद्धत्वात्तेन रूपेण काम-

नोपपद्यत इत्यर्थः ॥ अन्यच्च ॥ ग्रामादिकिञ्चि-
दप्राप्तं नरः प्राप्तुमिहेच्छति हेमादिविस्मृतं कि
ञ्चित्करस्थमपि लिप्सते ॥ परिहार्य्यं तथाऽनिष्टं
कंटकादि जिहासति रज्ज्वां सर्पादि किञ्चिच्च
त्यक्तमेव जिहासति॥ नियतोपायसाध्यत्वाद-
वाप्यपरिहार्य्ययोः विधितः प्रतिषेधाच्च साध-
नापेक्षिता भवेत् ॥ अज्ञानान्तरितत्वेन संप्राप्त-
त्यक्तयोः पुनः ॥ याथात्म्यज्ञानतो नान्यत्पुरु-
षार्थाय कल्पत इति वस्तुनि विकल्पासंभवेन
कथं तत्तद्वादिनामेकदेशिनां च विकल्पा इति
न शंकनीयम् ॥ परमात्मकज्ञानविषयतया वि-
कल्पासंभवेपि संशयविषयतया स्थाणुः पुरुषो
वेत्यादाविव विकल्पप्रतीतेः सत्त्वे बाधाभावात्॥
बाधितविषयत्ववद्दोषजन्यत्वस्यापि भ्रमत्वप्र-
योजकत्वात् ॥ तदुक्तं मीमांसाभाष्यकारैः ॥
"यस्य च दुष्टं करणं यत्र च मिथ्येति प्रत्ययः
स एवासमीचीनो नान्य इति" मीमांसावार्तिक-
कारैश्च तस्माद्बोधात्मकत्वेन प्राप्ता बुद्धेः प्रमाण-

ता ॥ अन्यथा सा तु हेतूत्थदोषज्ञानादपोद्यत इति तुल्यवदेवाप्रामाण्यप्रयोजकद्वयमुक्तं तस्माद्बाधाभावेपि दोषजन्यत्वादप्रामाण्यमेवेति तथा न्यायपारावारदर्शी विश्वविख्यातकीर्तिरुदयनाचार्य्योऽपि न्यायकुसुमाञ्जलौ चतुर्थेस्तवके आह"मितिः सम्यक्परिच्छित्तिस्तद्वत्ता च प्रमातृता तदयोगव्यवच्छेदः प्रामाण्यं गौतमे मत इति" बौद्धाधिकारेपि तथा स एवाह तदेव वाक्यम्॥ एतावता ग्रन्थेनाभिहितं सर्वं श्रीमन्त्रराजेन स्वावयवैः पञ्चभिरक्षरैः समस्तैर्व्यस्तैश्च पंचब्रह्मपुरुषात्मकैर्ध्वनितमिति तदेवाविर्भावयितुं त्यागोहीत्यादिकया नसंशयइत्यन्तिकया त्रयोविंशतिश्लोक्या श्रीभगवान् श्रीमहिव्यमन्त्रराजभाष्यकारो मन्दाधिकारिणोऽनुजग्राह ॥

त्यागइति स्वस्वत्वनिवृत्त्यनुकूलो व्यापारः॥

हि इति हिशब्दो नमश्शब्दवृत्तित्यागार्थकत्वस्यैषोर्घ इत्यादौ प्रसिद्धिं द्योतयति ॥

नमस इति नमःशब्दस्य अनुकरणत्वेनानव्यय

त्वान्नसुब्लुक् वाच्य इति शक्तिलक्षणान्यतरवृत्ति-
विषय इत्यर्थः॥अनेकार्थशब्दस्थले प्रसिद्धार्थे श
क्तिरप्रसिद्धार्थे लक्षणेति नैयायिकाः मीमांसकाश्च
अन्वयानुपपत्तिरूपस्य तात्पर्य्यानुपपत्तिरूपस्य
वा लक्षणावीजस्येदृशेऽर्थेऽनुपलम्भात् प्रसिद्धा-
प्रसिद्धयोरुभयोरप्यर्थयोश्शक्तिरेवेति वैयाकर-
णाः ॥ प्रकृते नमश्शब्दस्य नमस्कारार्थत्वमेव
लोकवेदयोर्वहुशः प्रसिद्धन्नतु त्यागार्थकत्वमि-
ति त्यागेऽर्थे लक्षणैवोचितेति मूलस्य वाच्य इ-
त्यस्य यथाश्रुतस्य शक्तिवृत्तिविषयत्वार्थक-
त्वे नैयायिकमीमांसकयोर्मते असंगतिरेवस्या-
दित्यन्यतरवृत्तिविषयत्वलक्षणं वाच्यत्वं प्रकृ-
ते स्वीकर्तव्यम् ॥ वैयाकरणमते तु यथाश्रुतेपि
न काप्यनुपपत्तिः ॥ "त्यागे नमस्कृतौ चार्थे
ध्याने भाने तथा स्मृतौ॥नमश्शब्दं प्रयुञ्जीत भावे
भ्रंशे विशेषत इति"निघण्टुस्तन्मतेपि नानुपपत्तिः
शक्तिग्राहकत्वस्य प्रसिद्धाप्रसिद्धयोस्समत्वात् ॥
मूले वाच्य इति वदतां श्रीमदाचार्य्यपादानामपि

नमस्कार इव त्यागेऽपि शक्तिरेव नतु लक्षणेति स्वारस्यं प्रतीयतेऽन्यथा लक्ष्य इत्येव वदेयुर्नतु वाच्य इति ॥ तथाच वाच्य इत्यस्य शक्तिविषय इत्येवार्थ उचितो न तु शक्ति लक्षणान्यतरवृत्तिविषय इत्यर्थ इति प्रकाशकारादीनामपीदमेवाभिमतम् ॥ आनन्द इति आनन्दः परं ब्रह्म आनन्दो ब्रह्मेति व्यजानात्॥अनन्दाद्ध्येव खल्विमानि भूतानीत्यादिश्रुतिभ्यः परं ब्रह्म साम्बशिवः ॥ सत्यं सत्यं परं ब्रह्म पुरुषमित्यादि ॥ शिवमद्वितीयन्तुरीयं मन्यन्त इत्यादिश्रुतिभ्यश्च प्रकृतेरिति शिवशब्दात्मिकायाः तथेति तथेत्यस्य फलमित्युत्तरेणान्वयः तथेत्यस्य तद्वदित्यर्थः ॥ यथा प्रकृतेः कश्चिदर्थस्तथा प्रत्ययस्यापि कश्चिदर्थो नतु निरर्थकः ॥ प्रत्ययेति तथेतिशब्दप्रयोगतात्पर्यम्॥ फलमिति फलमित्यस्योद्देशत्वमित्यर्थ इति नैयायिका मीमांसकाश्च उद्देश्ये लक्षणा धर्मे शक्तिर्लाघवादित्यभिप्रायस्तेषां फलमित्यस्योद्देश्यमित्येवार्थ इति वैया-

करणाः ॥ लक्षणाबीजस्याभावादिति तेषां भावः फलमिति वदतां श्रीमदाचार्य्यपादानामपि फलमित्यस्योद्देश्यमित्येवार्थो न तूद्देश्यत्वमित्यर्थ इत्यभिमतमन्यथा फलत्वमित्येव ब्रूयुर्न तु फलमिति॥ वस्तुतस्तु फलमित्यस्योद्देश्यविधेयभावः सम्बन्ध इत्यर्थ उचितः ॥ उपपदविभक्तेस्सम्बन्धार्थकतायास्सर्वशास्त्रसम्मतत्वात् ॥ शिवस्योद्देश्यत्वं द्रव्यकर्मकत्यागस्य च विधेयत्वम् ॥ तथा च शिवोद्देश्यकत्यागविषयो द्रव्यमिति बोधः फलितः ॥ प्रत्ययेति चतुर्थ्येकवचनङेप्रत्यये-त्यर्थः ॥ वाच्यमिति ॥ वाच्यमित्यस्य व्याख्यानं पूर्ववत् ॥ त्यागस्य सकर्मकत्वात्कर्मजिज्ञासायामाह त्याज्यमिति त्याज्यत्वं तस्य सामान्यतया निर्विशेषस्य सामान्यस्याभावात् त्याज्यविशेषमाह पत्रफलेति ॥ १ ॥ पदार्थानभिधाय वाक्यार्थमाह त्यजामीति ददामि उत्सृजामीति यावत् ॥ इदमिदमिति ॥ न विप्सायां द्विर्वचनं ग्रामो ग्रामो रमणीय इत्यादाविव व्याप्यव्यापकभावसम्बन्धस्याप्रतीतेः ॥ किन्तु देयद्रव्यस्य प्रातिस्विकरूपाभिप्रायेणैच्छिकः पुनःपुनः प्रयोगः॥

त्यजामीदमिदं सर्वं
चतुर्णामिह सिद्धये
अथ वा नमसो वाच्यः
प्रणामो दैन्यलब्धये ॥ २ ॥

अनावृत्तिः शब्दादनावृत्तिः शब्दादितिवत् ॥ देययावद्द्रव्याणां स्मृतानां केषांचिदस्मृतानां च कूटस्वरूपाभिप्रायेणाह सर्वमिति ॥ यावद्देयं यथाशक्ति स्मृतमस्मृतमथवा तत् सर्वमुत्सृजामीति तात्पर्यार्थः ॥ परममूले फलस्यानुक्तावपि विश्वजिता यजतेत्यत्र यथा फलस्यानुक्तावपि यागसार्थक्याय स्वर्गकाम इति कल्प्यते ॥ तथेहार्थादिचतुष्टयकाम इति कल्प्यते ॥ यागस्थले स्वर्गमात्रकल्पनेपि परमेश्वरचरणारविन्दपूजोयाः ये यथा मां प्रपद्यन्ते इत्यादिवाक्यैस्सकलफलस्याधिकारिविशेषेषु प्रतिपाद्यतया अर्थधर्मकाममोक्षाणां श्रीपादारविन्दप्रसादेन सुलभत्वात्तदाह चतुर्णामिति॥इहेति जीवद्दशायामित्यर्थः ॥ ननु जीवद्दशायामर्थधर्मयोस्सिद्धावपि कामशब्दोदितस्वर्गस्य यजमानत्वावस्थापन्न-

शरीरावच्छेदेन न सिद्धिः ॥ किन्तु स्वर्गफलभोक्तृत्वावस्थापन्नशरीरान्तरावच्छेदेन यजमानशरीरस्य नष्टत्वादेवं मोक्षस्यापि यच्छरीरावच्छेदेन ज्ञानोत्पत्तिस्तच्छरीरावच्छेदेन न लाभः ॥ किन्तु साधनाधिकरणशरीरस्य नाशादनन्तरं लाभो मोक्षस्येति कथं चतुर्णामिहेत्युक्तिस्सङ्गच्छत इति चेन्न ॥ ज्ञानस्य दृष्टफलकतया ज्ञानाधिकरणशरीरावच्छेदेनैव मोक्षलाभः ॥ ब्रह्मवेद ब्रह्मैव भवति पश्यन्नृषिर्वामदेवः प्रतिपेदे इत्यादि श्रुतिभ्यो जीवन्मुक्तेर्जीवद्दशायामेव लाभेन विमुक्तश्च विमुच्यत इत्यादि श्रुत्या विदेहमुक्तिलाभेपि विमुक्तश्चेति स्वारस्येन जीवन्मुक्तिलाभाच्च तदंशेप्यनुपपत्तिरित्याशयात् स्वर्गांशे इहेत्यनेन यागानन्तरभाविकिञ्चिदपूर्वं स्वर्गाव्यवहितपूर्ववर्तियागादुत्पद्यते यजमानशरीरावच्छेदेन तदेवापूर्वंस्वर्गजनकं स्वर्गजनकत्वात् स्वर्गस्वं भाक्तन्तत्रेति तादृशभाक्तस्वर्गाधिकरणमिदमेव यजमानशरीरमिहेत्यनेन गृह्यते इ-

त्याश्रयात् ॥ सिद्धय इति कामादीनां त्रयाणाम नित्यत्वात्तदंशे सिद्धिरुत्पत्तिर्मोक्षस्य नित्यत्वा- त्तदंशे सिद्धिर्ज्ञप्तिस्तस्यै इत्यर्थः ॥ सिद्धय इत्यस्य तन्त्रेणोभयार्थकत्वमेकरूपावच्छिन्नेन्वयाभावेन कथमेकशेष इति न शङ्कनीयमनेकशब्दप्रयोगं विनैवैकशब्दस्य बह्वर्थकतयानेकशब्दाप्रसक्ता- वेकशेषस्यैवाभावात् ॥ वाह्यार्चादिनैव वर्गच- तुष्टयसिद्धौ ध्यानज्ञानादिशास्त्रवैयर्थ्यापत्त्या न त्यागार्थकत्वम् नमश्शब्दस्येत्यधिकारिविशेषं प्रत्याह ॥ अथवेति ॥ नमस इति पूर्ववत् विश्व- जिन्न्यायेन फलमाह दैन्येति ॥ २ ॥

दैन्यशब्दस्यार्थान्न घण्टया अधीयत इति तदीयश्लोकस्य पूर्वार्द्धमादत्ते दैन्यं सेवेति ॥ वाच्या एव तु ते सर्वे न तु लक्ष्याः कथञ्चनेति तस्योत्तरार्द्धन्तत्फलं तु मीमांसकनैयायिकमते नानार्थशब्दस्थलेऽप्रसिद्धेऽर्थे लक्षणेति तन्निरस- नम् ॥ सेवाध्यानं न तु पूजा तस्या उक्तत्वात् ॥ दीनः सेवकः ध्याता ज्ञप्तिः ज्ञानन्तदस्यास्तीति ज्ञप्तिमान् ज्ञानी सिद्धि-

दैन्यं सेवा तथा ज्ञप्ति-
स्सिद्धिस्सर्वस्य वस्तुनः ॥
नमामि देवदेवेशं
सकामोऽकाम एव वा ॥ ३ ॥

स्सर्वस्येति ॥ सङ्कल्पमात्रेण सकलाभिमतान-भिमतपदार्थानां रचना सा यस्यास्ति स सिद्धि-मान् ॥ तद्भावो दैन्यं तस्य लाभायेत्यर्थः ॥ अ-स्मिन्नर्थे वाक्यार्थमाह ॥ नमामीति ॥ नमनं ध्यानं ज्ञानं वा ॥ अणिमाद्यष्टसिद्धिर्वा अधि-कारिविशेषस्यानुक्तत्वेपि सामर्थ्यात्सर्वमते इदं विशेषणं बोध्यम् ॥ सकाम इत्यादि ॥ प्रायेण सकामत्वमेव भवतीति प्रथमं प्रयोगः ॥ शिव शब्दार्थकुक्षिप्रविष्टत्वादाह देवदेवेति विनिग-मनाविरहादाह सकाम इति ॥ एवार्थस्य प्रत्ये-कमन्वयः ॥ एकाधिकरणकत्वस्योभयोर्विरो-धात् ॥ एवेनैव समुच्चयनिराकरणम् अत्रार्थे वाच्यार्थसौष्ठवास्ताह वेति ॥ ३ ॥

नञा निषिध्यते भाव-

विकृतिर्ज्जगदात्मनः ॥

भसनं शिवदेवेशा

नेह नानास्ति शब्दतः॥ ४ ॥

परमगुरावर्पितकर्मभिश्चित्तशुद्धौ श्रीमत्पादारविन्दोपासनया चित्तैकाग्रसम्पत्तौ च ज्ञानेधिकारी भवतीति तं प्रतिविवर्त्तवादादिना शुद्धं स्वरूपमुपदिशति ॥ नञेति परिणामार्थकमसूधातोर्मसनमित्यर्थे म इति ॥ सम्पदादित्वाद्भावे क्विप्.॥ न मः परिणामो यस्य स नमास्तत्सम्बुद्धौ हेनम इति ॥ नैकधेत्यादाविव निरनुबन्धो न शब्द इति न नलोपः ॥ शिवेत्यपि सम्बुद्ध्यन्तन्निरुपपदभावशब्दो ब्रह्मणि विकृति शब्दः षड्विकारवाची ॥ भावस्य ब्रह्मणो विकृतिर्भावविकृतिरिति षष्ठीतत्पुरुषः आत्मन इत्यत्र सापेक्षत्वेपि गमकत्वात्समासः ॥ आत्मन इत्यस्य ब्रह्मण इति समानाधिकरणं विशे-

अयेति गमयेत्यर्थे
तस्माच्छुद्धोस्मि नित्यशः
प्रणामो देहगेहादे-
रभिमानस्य नाशनम् ॥ ५ ॥

षणं भावाभिन्नस्य आत्मन इत्यर्थः का विकृ-तिरित्यपेक्षायामाह जगदिति ॥ जगद्रूपो विका-रो ब्रह्मणो नास्तीत्यर्थः ॥ शिवशब्दार्थमाह देवेशेति ॥ अत्रार्थे प्रमाणमाह नेह नानेति ॥४॥

चतुर्थ्यर्थमाह अयेति ॥ तस्मात्तव विकारा-भावे प्रवेशस्याभावादहं शुद्धोऽस्मीति फलितं नित्यश इत्यनेन सर्वदा एकरूपत्वन्नतु संस्का-र्यत्वादिरूपतेति ध्वनितम् पाशुपतमतेनाह प्रणाम इति ॥ ५ ॥

तन्मते एव शिवशब्दार्थमाह ॥ शिवस्य चिद्रूपा नारायणाख्या शक्तिस्तदीया ब्रह्माख्या शक्तिस्तिस्रश्शक्तयोपि त्रयाणांस्वाभिन्नाः ॥ शक्तिशक्तिमतोरभेदात् ॥ नजेति* मन्त्र-

*इदं पूर्वोक्तस्यैव व्याख्यानं सिंहावलोकनन्यायेन एवमन्यत्रापि बोध्यम् ।

शिवो ब्रह्मादिरूपः स्या-
च्छक्तिभिस्तिसृभिस्सह
अथ वा तुर्यमेव स्या-
न्निर्गुणं ब्रह्म तत्परम् ॥ ६ ॥

घटकनञर्थवाचिनिरनुबन्धनशब्देनेत्यर्थः ॥ सानुबन्धनिरनुबन्धयोरुक्त्यनुक्त्योर्हेतूप्रसिद्धप्रसिद्धी ॥ शिवदेवेशेत्यत्राद्यं प्रतीकं द्वितीयं व्याख्यानं नेह नानास्तीति शब्दत इति वक्तव्ये इति शब्दानुक्तिस्तु क्वचिदितिं विनाप्यनुकरणत्वस्य दर्शनात् ॥ देवदेवेशमिति देवानामिन्द्रादीनां देवा ब्रह्मविष्णुरुद्रास्तेषामीशः ॥ देवेशेत्यत्र देवानां ब्रह्मादीनामीशः ॥ द्वितीयपक्षे नमश्शब्दस्य प्रणामार्थकत्वमुक्तं तत्र प्रणामशब्दार्थमाह ॥ अन्यत्र प्रसिद्धप्रणामशब्दार्थस्य त्यागे अप्रसिद्धप्रणामलक्षणकरणे वीजमुपासना ज्ञानप्रकरणे इहशस्यैवौचित्यम-

नमस्तो नमने शक्ति-
र्नमनं ध्यानमेव च ॥
चतुर्थ्या तादात्म्यसम्बन्धः
कथ्यते प्रत्यगात्मनोः ॥ ७ ॥

न्याहृशप्रसिद्धलक्षणस्य देहाद्यभिमानित्वं प्रयोजकम् ॥ उपासनापक्षे शिवस्वरूपमाह शिव इति ॥ आदिना विष्णुरुद्रौ ॥ तिसृभिः सरस्वत्यादिभिः ज्ञानपक्षे शिवशब्दार्थमाह अथवेति ॥ ६ ॥

निर्गुणपक्षे नमश्शब्दार्थमाह नमस इति ॥ ध्यानन्निदिध्यासनम् ॥ पूर्वंदैन्यशब्देन सगुणस्य ध्यानमुक्तमिदानीं तु निर्गुणस्य ध्यानं निदिध्यासनम् ॥ पूर्वं देहाद्यभिमानाभावप्रणामस्तत्फलं सगुणध्यानम् इदानीं नमश्शब्दार्थो ध्यानं निदिध्यासनं ज्ञप्तिशब्देनोक्तमिदानीं ज्ञानप्रकरणमाह चतुर्थ्येति तादात्म्यसम्बन्धः अभेदः प्रत्यङ् जीवः आत्मा ईश्वरः ॥७॥

अहं शिवश्शिवोऽहं च
मन्ये वेदान्तनिष्ठया ॥
इत्येव नम इत्युक्तं
वेदैश्शास्त्रैश्च सर्वशः ॥ ८ ॥
अथवा दास एवाह-
महन्दास इतीरणम् ॥
इत्येव नम इत्युक्तं
वेदैश्शास्त्रैश्च सर्वशः ॥ ९ ॥
अथवेदमिदं सर्वं

अनयोरभेदस्तत्फलितमाह अहमिति ॥८॥

उपासनापक्षे नमश्शब्दार्थो लोके यः प्रसिद्धस्तेन नमस्कर्त्ता अपकृष्टः ॥ नमस्कार्य्यः उत्कृष्टस्तत्फलितं वाच्यार्थमाह अहं दास इति॥९॥ ज्ञानपक्षे केवलज्ञान्यभिप्रायेण पूर्वमुक्तमिदानीं जीवन्मुक्तज्ञान्यभिप्रायेण सर्वैषणात्यागपूर्वकं ब्रह्मसाक्षात्कारं मनसि निधाय नमश्शब्दार्थ-

त्यजामि परमाप्तये ॥

अर्त्थन्धर्म्मञ्च कामं च

वाञ्छंश्च जगदीश्वरम् ॥ १० ॥

एतन्मन्त्रार्त्थतत्त्वज्ञै-

र्वेदवेदान्ततत्परैः ॥

निर्णीतं तत्त्वगर्भं य-

द्विज्ञेयं मुक्तिलब्धये ॥ ११ ॥

अथ वा मुक्तिलाभार्त्थं

ध्येयं तत्त्वं विवेकतः ॥

भिन्नबुद्ध्या हृदा देवं

माह ॥ अथवेदमिति ॥ त्याज्यमाह सर्वमिति विश्वजिन्न्यायेनानुगुणं फलमाह परमेति ॥ परमो मोक्षः सर्वशब्दार्थमाह अर्थमिति परमाप्ति-शब्दार्थं व्याचष्टे वाञ्छंश्चेति ॥ १० ॥

दशभिः पदैरुक्तं यत्तद्ज्ञातव्यमित्याह ए-कादशकेन उपासनापक्षे सेव्यसेवकभाव इत्युक्तं

मन्त्रेणोर्ध्वं जगद्गुरुम् ॥ १२ ॥ ॥

नमेरचि नमः प्रोक्तो

जन्ता स्याज्जगदीश्वरे ॥

तस्माद्दासोहमित्येवं

मत्वा मां प्रापयात्मनि ॥ १३ ॥

तत्स्पष्टयति द्वादशकेन ॥ ११ ॥ ॥ १२ ॥

सेव्यसेवकभावः कथं बुध्यत इति जिज्ञासां वारयितुं नमश्शब्दस्यार्थान्तरमाह नमेरिति ॥ नमतीति नमः पचादित्वादच् प्रत्ययः ॥ शिवशब्दार्थः स एवेत्याह जगदीश्वरेति ॥ फलितं-वाक्यार्थमाह तस्मादिति ॥ उपस्थितत्वादाह मामिति ॥ चतुर्थ्यर्थमाह प्रापयेति ॥ उपस्थितत्वादाह आत्मनीति ॥ स्वस्मिन् शिवे ॥ १३ ॥

उपासनापक्षे शिवो ब्रह्मादिरूप इत्यनेन कार्यब्रह्मत्वं शिवशब्दस्याभिहितं ज्ञानपक्षे अथ वा तुर्य्यमेवेत्यनेन निर्गुणब्रह्मपरत्वं शिवशब्दस्याभिहितमिदानीं कारणब्रह्मपरत्वं शिवशब्दस्य

अस्मिञ्छेते जगत् सर्वं
तन्मयं शब्दगामि यत् ॥

निरुक्त्याभिधत्ते अस्मिञ्छेत इति चतुर्दशेन अस्मिन्निति ॥ अस्मिन्निति यस्मिन्नित्यर्थे लक्षणया सर्वमाकाशादिप्रपञ्चात्मकं जगदुत्पत्तिव्युत्क्रमेण शेते लीयते यस्मिन् तत् शि। शीङ् धातोः क्विप् ह्रस्वो नपुंसक इति ह्रस्वः सन्निपातपरिभाषया ह्रस्वस्यपितीति न तुक् शि इति शब्देन प्रधानं प्रकृतिमायापरपर्य्यायम् प्रलयकाले तन्मयं प्रधानमयम् ॥ वैयाकरणमतेन कार्य्यशब्दब्रह्मस्फोटलक्षणनिर्देशद्वारा प्रधानं कारणं निर्द्दिशति शब्दगामीति ॥ यत्प्रधानं प्रकृत्यपरपर्य्यायं शब्दब्रह्मस्फोटलक्षणं गमयति जनयति तत् शब्दगामि ॥ प्रकृते गमिर्जनिमाहानेकार्थत्वात् तद्वानात् ॥ तस्य शिशब्दोदितस्य प्रधानस्य वानात् ॥ स्वस्मिन्विलापनात् शिवः शिप्रधानं स्वस्मिन्वाति विलापयति इति

तद्ध्यानाच्छिव इत्युक्तं
कारणं ब्रह्मतत्पराः ॥ १४ ।
न मा यस्यास्ति लक्ष्मीश !
सोऽहं देवो न संशयः ॥

शिवः ॥ धातूनामनेकार्थतया विलापनमर्थः प्रकृतेर्वाधातोरातोऽनुपसर्गे क इति कप्रत्ययः ॥ १४ ॥

अदन्तनमेति शब्दो मन्त्रे इति मत्वाऽऽह नमेति ॥ न मा अविद्या यस्यास्ति स नमः अहम् नमः निरविद्यः ॥ शास्त्रदृष्ट्या जीवस्य वस्तुनः शुद्धब्रह्मस्वरूपतया अहमविद्यमानाविद्यस्तथापि अहमज्ञ इत्यनुभवात्स्वस्मिन्नविद्यानुभूयते शिवेति सम्बुध्यन्तस्य लक्ष्मीश इति विवरणं लक्ष्यते बुध्यते परमात्मा यया सा लक्ष्मीः विद्या ईशानस्सर्वविद्यानामित्यादि श्रुतिभिः ॥ शिवस्य सर्वविद्याकर्तृत्वेन नियन्तृत्वादीशत्वमिति ॥ हे लक्ष्मीश ! हे विद्येश ! शास्त्र-

तस्मान्मे प्रापयेहैव
लक्ष्मीं विद्यां सनातनीम् ॥ १५ ॥
यस्मादानन्दरूपस्त्वं
देवैर्वेदैर्निगद्यसे ॥

दृष्टया अविद्यायामपि अभावेपि स्वानुभवप्राप्तायाः अविद्याया निराकरणे न मे सामर्थ्यमिति विद्यां सनातनीं प्रापय इहैवेत्यनेन विद्याया दृष्टफलकत्वं सूचितम् ॥ लक्ष्मीमित्यस्य विद्यामिति विवरणं सनातनीमित्यनेन विद्याया नित्यत्वं सूचितं सोहं देवो न संशय इत्याकारां संशयविपर्ययादिशून्यामित्यर्थः ॥१५॥

पूर्वोक्तमर्थं फलितमुपसंहरति यस्मादिति ॥ शिवशब्दार्थमाह आनन्देति ॥ देवैर्विद्वद्भिर्वेदैः ऋग्वेदादिभिर्निगद्यसे उपदिश्यसे त्वमानन्दरूपः ॥ अहं तु त्वद्भृत्यो दुःखीति मे मह्यं तस्मादानन्दस्वरूपत्वाद्देहि योगीश ! योगो निजानन्दानुभवो योगिनस्सनकादयस्तेषामीश निजा-

तस्मान्मे देहि योगीश !
भद्रं ज्ञानं सुभावनम् ॥ १६ ॥

नन्दप्रदभद्रं निजानन्दस्वरूपत्वाद्धे हि योगीश योगो निजानन्दस्य स्वरूपज्ञानं सुष्ठु भाव्यते स्वस्वरूपं सच्चिदानन्दलक्षणं स्मर्यते निर्विघ्नं येन तत्सुभावनं तादृशं ज्ञानं देहीति ॥ १६ ॥

नमश्शब्दार्थान्तरं शिवार्थेति शब्दस्य चार्थान्तरमाह ॥ यस्मात्त्वन्नेतीति ॥ नेति नेतीत्याकारक वेदजं वेदोद्भवं नञर्थम् ॥ आकाशादिप्रपञ्चस्याभावमाकाशादि प्रपञ्चम् मासि त्वं सच्चिदानन्दस्वरूपे अध्यस्यसि शुक्तौ रजतमिवारोपयसि माधातो रिहाऽध्यासोऽर्थः ॥ तस्माद्वेदप्रामाण्यात्त्वं नमोसि ॥ आकाशादिप्रपञ्चतदभावयोरधिष्ठानस्वरूपोसीत्यर्थः ॥ अतो मे मह्यं भद्रं ज्ञानं देहीति शेषः ॥ यतः यस्माद्धेतोस्त्वं नमः भ्रमज्ञः ॥ अहम् अनमो जानः ॥ अनम इत्यकारच्छेद एकत्र नमो भ्रमज्ञः न नमः अनमः भ्रान्तः ॥ अतो भृत्यं भ्रान्तं मां भ्रम-

यस्मात्त्वन्नेति नेतीति
नञर्थं मासि वेदजम् ॥
तस्मान्नमोऽसि भद्रं मे
यतो जातो नमो नमः ॥ १७ ॥
शिवं शिवमथाऽऽप्राप्त-
श्शिवायेति निगद्यसे ॥
शिवाय! मे तथा प्राप्त्या

नाशनेन भ्रमञ्जं कुरु इति फलितोऽर्थः ॥ १७ ॥

इदानीं शिवायशब्दार्थमाह शिवमिति ॥ एकः शिवशब्दो नित्यवाची ॥ द्वितीयः सच्चिदानन्दवाची॥ आप्राप्त इत्याकारच्छेदः ॥ शिवं आयातः सच्चिदानन्दं स्वरूपं नित्यं सदा प्राप्तः सदानुभविता असि त्वम् ॥ अतो वेदैः शिवाय इति शब्देन निगद्यसे उपदिश्यसे शिवायेति सम्बुद्ध्यन्तं हे शिवाय! सदा सच्चिदानन्दस्वस्वरूपनिमग्नशिवायं मे मम शिवायं सच्चिदानन्द-

शिवायं कुरु सर्वदा ॥ १८ ॥
शिवां यातो महाभद्र-
नमोऽहं मायया ध्रुवम् ॥

स्वरूपं तथा विद्यया प्राप्तया लाभेन शिवायं सच्चिदानन्दस्वस्वरूपानुभवितारं कुरु सर्वदा १८

शिवायशब्दस्य नमश्शब्दस्य चार्थान्तरमाह शिवां यात इति ॥ शिवां चिद्रूपां ब्रह्मविद्या-लक्षणां शक्तिं यातः प्राप्त इति शिवायः ॥ आङ् रहितात् शिवाशब्दे उपपदे याधातोः कप्रत्ययः महाभद्रेति शिवायशब्दार्थविवरणं यत-श्चिद्रूपां शक्तिं प्राप्तः ॥ अतो महाभद्र महा-मङ्गलस्वरूप नमोहम्॥ नमा चिद्रूपा शक्तिर्यस्य स नमः ॥ अविद्यावान्मायया अविद्यया ध्रु-वम् ततः तस्मात् नमाय मह्यम् अविद्यावते मह्यं मः परिणामम्. अविद्यया भासमानं विद्य-या निराकृत्य शिवायं कुरु कृधातुरिहदानार्थः ॥ शिवायं चिद्रूपशक्तिमद्रूपं मदीयमविद्ययातिरो

ततो नमाय मह्यं म-
श्शिवाय कुरु सर्वथा ॥ १८ ॥
शिवमेषि यतो ज्ञप्त्या
शिवायस्त्वं प्रपठ्यसे ॥

हितं विद्यया देहि प्रादुर्भावयेत्यर्थः ॥ मः इत्यत्र निराकृत्येति शेषः ॥ अस्मिन्पक्षे परिणामवा-चिसान्तं म इति पदमार्थिकमाग न्तु कञ्च तु मन्त्र षट्कम् ॥ १९ ॥

नमशब्दस्य शिवायशब्दस्य चार्थान्तरमाह शिवमेषीति शिवमिति कर्मणि उपपदे इधातो-र्ज्ञानार्थात् कर्म्मण्यणिति अण्प्रत्ययः ॥ अ-चोञ्णितीति वृद्धिः ॥ शिवायः यतः यस्माज् ज्ञप्त्या विद्यया शिवं सच्चिदानन्दस्वस्वरूपम् एषि जानासि अतः त्वं वेदैः शिवायेति पदेन प्रपठ्यसे उपदिश्यसे ॥ नमशब्दार्थमाह नते इति न मा अविद्या यस्य स नमः ॥ अविद्या रहितः ॥ ते तव माया अविद्या न नास्ति

न ते माया यतो ज्ञप्त्या
नमो वेदैः प्रपठ्यसे ॥ २०
नमोऽहञ्च शिवायोऽहं
नमो मह्यं नमो नमः ॥

ज्ञप्त्या निराकृतत्वादिति शेषः ॥ अतो वेदैस्त्वं नमः निरविद्यो नम इति शब्देन प्रपठ्यसे॥२०॥

परमगुरावर्पितकर्मभिश्चित्तशुद्धौ श्रीमत्-पादारविन्दोपासनया चित्तैकाग्र्यसम्पत्तौ च श्रीपरब्रह्मसाम्बशिवकृपया शमदमादिसाधन-सम्पत्तौ ब्रह्मनिष्ठश्रोत्रियगुरुषु सदनादिना म-हावाक्यजन्याखण्डसच्चिदानन्दपरब्रह्मसाम्बशि-वाभिन्नशारीरकजिज्ञासुस्वरूपसाक्षात्कारसम्प-त्तौ स्वानुभवानन्दं साम्बशिवाभिन्नगुरुं प्रति परीक्षायै ब्रह्मानन्दसमुल्लासं समुद्गिरतित्रि-भिः पदैर्नमोहमित्यादिभिः ॥ अहं नमः न मा माया यस्य स नमः॥ निर्मायोऽहं शिवायोहं शिवा चिद्रूपा शक्तिस्तामेतीति शिवायः

नमो नमाय शुद्धाय
मङ्गलाय नमो नमः ॥२१॥
नमो नमसनं शम्भो-

श्चिद्रूपशक्तिमान् शिवोऽहम् ॥ इदानीं स्वस्मादन्यस्य नमस्कार्य्यस्याननुभवादात्मानमेव सच्चिदानन्दं परब्रह्म साम्बसदाशिवं साक्षात्कृत्य नमस्करोति नम इति मह्यं सच्चिदानन्दपरब्रह्मसाम्बसदाशिवाय नमः ॥ नमश्शब्दत्रयप्रयोगो वाङ्मनःकायकृतानां त्रयाणां नमस्काराणां सङ्ग्रहाय नमनमिहानुसन्धानं परब्रह्मसाम्बसदाशिवस्य गुरुमन्त्रस्वस्वरूपाभिन्नस्य नमो नमाय निर्मायस्वरूपाय तत्फलितमाह शुद्धायेति ॥ अविद्यामायारूपोपाधिद्वयशून्याय तत्फलमाह मङ्गलायेति ॥ संसारात्मकामङ्गलरहिताय नमश्शब्दप्रयोगः पूर्वपूर्ववत् ॥ २१ ॥

कथं शुद्धत्वं ब्रह्मणः ॥मायोपहितत्वेन तटस्थलक्षणसंसारकर्तृत्वादित्वात् ॥ अविद्योपहि-

निराकाराय ते नमः
निर्गुणं निष्क्रियं शान्त-
मित्याद्याः श्रुतयो जगुः ॥ २२ ॥
नमो ब्रह्म निराकारं
शिवायं शिव सर्वदा ॥

तत्वेन भोक्तृत्वाच्चेत्यशङ्क्य समाधत्ते विवर्त्तवादेन नमो नेति ॥ नम इति प्रतीकं नमसनमिति विवरणम् न मसनं परिणामः आकाशादिप्रपञ्चात्मको यस्य शम्भोः किन्तु अध्यासमात्रमित्याह निराकारायेति तथाच सृष्ट्यादभावेन प्रवेशाभावेन च सिद्धं शुद्धत्वमित्यर्थं प्रमाणमाह निर्गुणमिति जगुरूचुः ॥ २२ ॥

पूर्वोक्तं स्वयं व्याचष्टे नम इति विव्रियमाणं ब्रह्मेति विवरणं तेन फलितमाह निराकारं निष्प्रपञ्चंशिवायं निजबोधस्वरूपं सर्वदा तेन नित्यत्वं ध्वनितम् ॥ स्वानुभवमाह अतोहमिति नमो इति अहं नमाः निर्विकारः ॥

अतोऽहं च नमो भद्र !
शिवायोहं न संशयः ॥ २३ ॥
इती श्रीभगवत्पादप-
द्माचार्य्यकृता दिव्य-

हे भद्र! सदा निर्विकारत्वान्निर्विघ्नस्वरूप! अहं शिवायः चिद्रूपशक्तिमान् ईश्वरगुरुमन्त्रप्रसादात्संशयो नष्ट इत्युपसंहरति नसंशय इत्युक्त्या स्त्रस्य कृतार्थताध्वनिता भवति नसंशय इति ग्रन्थान्ते मङ्गलं इति मन्त्रभाष्यपदयोजनम् २३ ॥

अत्रेदं चिन्त्यते ननु प्रमाश्रयः प्रमाता स एव क र्त्ताभोक्ता प्रदीपवत्स्वपरसाधारणः सर्वावभासकश्चेति न घटादिवत्साक्षिसापेक्ष इति चेन्न ॥ विकारित्वेन स्वविकारसाक्षित्वानुपपत्तेः ॥ दृश्यस्य द्रष्टृत्वाभावात्प्रमातुश्च परिणामित्वेन दृश्यत्वात् ॥ एकस्य कूटस्थस्यैव सर्वसाक्षित्वात् ॥ एकः कूटस्थो निर्धर्म्मकः साक्षी नाद्रियतेऽप्रमाणिकत्वादिति चेन्न ॥ तमेव भान्तमनुभाति सर्वं

मन्त्रराजपञ्चाक्षरी
व्याख्या सम्पूर्णा ॥ श्रीगुरो जयतु ॥

तस्य भासा सर्वमिदं विभाति ॥ न हि दृष्टेर्द्रष्टारं पश्ये अदृष्टे द्रष्टेत्यादि वदता वेदान्तप्रमाणराजेन तस्यैव सर्वसाक्षित्वेनाभिषिक्तत्वात् ॥ ननु महदेतदिन्द्रजालं प्रमाश्रयान्कूटस्थान्विहाय कूटस्थमप्रमाश्रयमेव प्रमाणराजः सर्वसाक्षिणं करोतीति वाढमिन्द्रजालमेवैतत् स्वप्नवदविद्याविलसितत्वात् तथापि दृश्यस्य घटादिवज्जडत्वेन कथं प्रमाश्रयत्वमिति चेन्न ॥ दर्पणादिवत्स्वच्छत्वेनचित्प्रतिबिम्बग्राहकत्वाच्चैतन्यतादात्म्याध्यासाद्वा ननु निरूपस्य निरवयवस्यात्मनः कथं प्रतिबिम्बं इति चेन् कात्रानुपपत्तिः ॥ विभ्रमहेतूनां विचित्रत्वात् ॥ जपाकुसुमरूपस्य नीरूपस्य निरवयवस्यापि स्फटिकादौ प्रतिबिम्बदर्शनात् ॥ शब्दस्यापि प्रतिशब्दाख्यप्रतिबिम्बोपलम्भात् ॥ तयोस्सं प्रतिपन्नप्रतिबिम्बवैलक्षण्या-

निरूपणात् ॥ तथापीन्द्रियग्राह्यस्यैव प्रतिबिम्बोपलम्भ इति चेन्न व्यभिचाराद्ऽनिन्द्रियग्राह्यस्य साक्षिप्रत्यक्षस्याप्याकाशस्य जलादौ प्रतिबिम्बोपलम्भात् ॥ अन्यथा जानुमात्रेप्युदकेऽतिगम्भीरप्रतीतिर्न स्यात्तह्यस्यान्धस्य जले प्रतिबिम्बप्रतीतिः कुतो न जायते ॥ आकाशप्रतिबिम्बस्य साक्षिभास्यत्वेपि अधिष्ठानग्रहणार्थं चक्षुषोऽपेक्षणात्॥ एतेन नीलं नभ इत्यादिभ्रमेपि चक्षुरन्वयव्यतिरेकौ व्याख्यातौ तत्र सालोकस्याकाशाधिष्ठानत्वात् ॥ तस्माच्चाक्षुषप्रतिबिम्बमेव रूपसापेक्षं नान्यदित्यवधेयम् ॥ तथाप्यात्मनः प्रतिबिम्बे किं मानमिति चेच्छृणु ॥ रूपं रूपं प्रति रूपो बभूव तदस्य रूपं प्रति चक्षणाय एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ॥ मायाभासेन जीवेशौ करोतीत्यादिश्रुतिः ॥ स एव इह प्रविष्टः ॥ स एतमेव सीमानं विदार्य्यै एतया द्वारा प्रापद्यते इन्द्रो मायाभिः पुरुरूप ईयते तत्सृष्ट्वा तदेवानुप्राविशदित्यादि प्रवेशश्रुत्य-

न्यथानुपपत्तिः ॥ आभास एव च अत एव चोपमा सूर्य्यकादिवदित्यादिपरमर्षिसूत्राणि तत्र मानानि तस्यच प्रतिबिम्बस्य सत्यत्वमेवेति प्रतिबिम्बवादिनः ॥ मिथ्यात्वमेवेत्याभासवादिनः ॥ स्वरूपे तु न विवाद इत्येतदन्यत् ॥ अचेतनविलक्षणत्वं तु तस्य श्रुतिसिद्धं प्रत्यक्षसिद्धं च तस्मात्सिद्धमन्तःकरणस्य प्रतिबिम्बाध्यासद्वारा प्रमातृत्वं ॥ नन्वध्यासोपि नोपपद्यते तथाहि आत्मनि वाऽनात्माध्यस्यतेऽनात्मनि वात्मा नाद्यः ॥ तस्य निस्सामान्यविशेषत्वेन सर्वदाभासमानत्वेन सादृश्यादिरहितत्वेन स्वाधिष्ठानत्वाऽसंभवात् ॥ नापि द्वितीयः ॥ तस्यामिथ्यात्वाभ्युपगमात् ॥ मिथ्यावस्तुनोऽधिष्ठानत्वेशून्यवादप्रसंगात् ॥ तस्य च सत्यत्वे तदनिवृत्तेरनिर्मोक्षप्रसंगाच्च ॥ न हि सत्यं क्वचिन्निवर्त्तते निवर्त्तमानं वा ज्ञानेन श्रुतयश्च भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः ॥ तमेव विदित्वातिमृत्युमत्येति नान्यः

पन्था विद्यतेऽनायतरति शोकमात्मवित् ॥ ब्रह्म-
वेदब्रह्मैवभवतीत्याद्याज्ञानात्सर्व संसारनिवृत्तिं
दर्शयन्ति ॥ तस्य च मिथ्यात्वं सूचयन्ति ॥ ए-
कमेवाद्वितीयं ब्रह्म अतोऽन्यदार्त्तम् ॥ नेह ना-
नास्ति किञ्चन अथात आदेशो नेति नेतीत्या-
श्रुतयः ॥ साक्षादेव मिथ्यात्वं प्रतिपादयन्ति
दृश्यत्वेन शुक्तिरजतवन्मिथ्यात्वानुमानाच्च ॥
आत्माध्यस्तःयैवात्मनि सिद्धे तत्राल्माध्या-
सः ॥ अनात्माध्यासेन चात्मनो दोषसादृश्यादि-
संभवेत् ॥ तत्रानात्माश्रयाद्यन्यतमदोषप्रसंगा-
च्च ॥ एतेनात्माऽनात्माध्यासविद्यकत्वोक्त विक-
ल्पावसर इत्यपास्तम् स्वप्रकाशात्मन्यविद्याया
अनुपपत्तेः ॥ तथाहि साध्यध्यस्ताऽनध्यस्ता वा
तत्र आद्ये आत्माश्रयान्यतमदोषप्रसंगात् ॥ अ-
न्ते तस्यानुच्छेदादनिर्मोक्षप्रसंगाच्च ॥ सर्वस्याऽ-
ध्यासमूलत्वे च भ्रमप्रमादादिव्यवस्था न स्या-
त् ॥ एकस्यैवात्मनः प्रमाण, प्रमेय, प्रमिति, प्र-
मातृ, रूपता च विरुद्धा अविरोधाभ्युपगमे च

सौगतापत्तिः इत्यत्रोच्यते अहं मनुष्यः कर्ताभो-
क्तेत्यादि प्रतीतिस्तावत्सर्वजनप्रसिद्धा सा च न
स्मृतिः ॥ अपरोक्षावभासत्वात् भेदाग्रहपूर्वक-
त्वाच्च नापि प्रमा श्रुतियुक्तिबाधितत्वात्तथा च
श्रुतयः योयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः
पुरुषः ॥ अयमात्मा ब्रह्म सत्यं ज्ञानमनन्तं
ब्रह्म विज्ञानमानन्दं ब्रह्म य आत्मा अपहतपा-
प्मा यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरः
योऽशनापिपासे शोकं मोहं जरां मृत्युमत्येति
स यत्तत्र किञ्चिनास्य नन्वागतस्तेन भवत्य-
संगो ह्ययं पुरुष इत्याद्या अकर्तृभोक्तृपरमा-
नन्दब्रह्मस्वरूपतामात्मनो दर्शयन्ति युक्तयश्च
विकारिणः परिच्छिन्नत्वे नानाऽऽत्मत्वापत्तेः
स्वेनैव स्वस्य ग्रहणे कर्तृकर्मविरोधात् दृग्दृ-
श्यसम्बन्धानुपपत्तेः॥ भेदेनाभेदेन वा धर्म्मि-
धर्म्मभावानुपपत्तेश्च ॥ ज्ञानानित्यत्वपक्षे त-
त्तद्व्यक्तिभेदध्वंसप्रागभावसमवायज्ञानत्वजा-
त्याद्यभ्युपगमे गौरवात् ॥ एकत्वाभ्युपगमे

चातिलाघवात् ॥ घटज्ञानं पटज्ञानमित्युपाधिभेदपुरस्कारेणैव ज्ञानभेदप्रतीतेः ॥ स्वतस्तु ज्ञानं ज्ञानमित्येकरूपावगमात् तदुत्पत्तिविनाशप्रतीत्योश्चावश्यकल्पनीयविषयसम्बन्धविषयतयाप्युपपत्तेः ॥ उपाधिपरामर्शमन्तरेण स्वत एव घटान्तरात् घटान्तरस्य प्रतीतेस्तत्प्रतिबन्धिग्रहासम्भवात् ॥ आकाशकालदिशामपि नानात्वापत्तेश्च ॥ कर्तृत्वादेर्वास्तवत्वेऽनिर्मोक्षप्रसंगात् ॥ स्वप्रकाशानभ्युपगमे च जगदान्ध्यसंगात् ॥ परप्रेमास्पदत्वेन च तस्यानन्दरूपत्वान्निर्द्धर्मकनित्यस्वप्रकाशसुखात्मक एवात्मेत्याशास्तस्मात्पारिशेष्यात् भ्रान्तिरियमिति स्थिते तत्कारणमपि योग्यम् किञ्चित्कल्पनीयं कल्प्यमानं च तदात्मन्यध्यस्ततयैव धर्म्मग्राहकमानेन सिध्यतीति न जानामीति साक्षीप्रतीति सिद्धमनिर्वाच्यमज्ञानमेव तत् ॥ नचेदमभावरूपं ज्ञानस्य नित्यत्वेन तदभावानुपपत्तेरुक्तत्वात्॥धर्मिप्रतियोगिज्ञानाऽज्ञानाभ्यां च व्या-

घातापत्तेः ॥ नापि भ्रमसंशयतत्संस्कारपरंपरा-
रूपं अपरोक्षत्वात् ॥ अतीतानागतभ्रमसंशय-
तत्संस्काराणां च परोक्षत्वेन ज्ञातुमशक्यत्वात् ॥
आवरणात्मकत्वादि भ्रमाद्युपादानत्वाच्च ॥
आत्मनो निर्विकारत्वादन्तःकरणादेश्च तज्जन्य-
त्वात् देवात्मशक्तिं स्वगुणैर्निगूढामित्यादिगु-
णवत्त्वश्रुतेश्च ॥ मायां तु प्रकृतिं विद्यान्मायि-
नं तु महेश्वरम् इन्द्रो मायाभिः पुरुरूप ईयते
अनृतेन हि प्रत्यूढा नीहारेण प्रावृत्ताः भूय-
श्चान्ते विश्वमायानिवृत्तिरित्यादिश्रुतेश्च ॥
मयाऽविद्याशब्दवाच्यमनिर्वचनीयमनृतं त-
त्वज्ञाननिवर्त्यं ह्यज्ञानमेव स्वपराध्यासे का-
रणं नचात्माश्रयादिदोषप्रसंगः ॥ अनादि-
त्वेन तन्निरासात् । अनादित्वेनोत्पत्यभावात् ॥
स्वप्रकाशात्मन एतज्ज्ञप्तिरूपत्वात्॥तेनाज्ञाना-
ध्यासविशिष्टचैतन्येहंकाराध्यासः तद्विशिष्टे च
कामसंकल्पाक्षदीनामहंकारधर्म्माणामिन्द्रियध-
र्म्माणां च काणत्वबधिरत्वादीनामध्यासः ॥

इन्द्रियाणां तु अतीन्द्रियत्वेन परोक्षत्वान्नापरोक्षधर्माध्यास इति सिद्धान्तः॥ तद्विशिष्टे च स्थूल देहाध्यासधर्म्मपुरष्कारेणैवाहं मनुष्य इत्याकारः॥ नतुस्वरूपतोहं देह इत्यध्यासस्तथा प्रतीत्यभावात्॥ तद्विशिष्टे च स्थौल्यादीनां देहधर्म्माणामध्यासः॥ तद्विशिष्टे च वाह्यानां पुत्रभार्य्यादीनां साकल्यवैकल्यादि धर्माध्यासः॥ एवं चैतन्यस्याप्यहंकारादिषु देहपर्य्यन्तेष्वध्यासः संसर्गतः अध्यासव्यवधानतारतम्या च्च प्रेमतारतम्यं भवति॥ तदुक्तं वार्त्तिकामृते॥ वित्तात्पुत्रः प्रियः पुत्रात्पिण्डः पिण्डात्तथेन्द्रियमिन्द्रियेभ्यः प्रियः प्राणः प्राणादात्मा परः प्रिय इति पिण्डं स्थूलशरीरं प्राणान्तः करणं देहापेक्षया चेन्द्रियाणामेव प्रियत्वं शस्त्रवृष्ट्यादिधारापाते चक्षुषो निमीलनदर्शनानुभवसिद्धम्॥ तेनान्योन्याध्यासाच्चिदचिद्ग्रन्थिरूपोध्यासः॥ एकतरस्याध्यासाङ्गीकारेऽन्यतरस्याभानप्रसंगादध्यस्तस्यैव भ्रमे भानानियमात्॥

इमेरङ्गरजत इति समूहालम्बनभ्रमवदवश्य-
मितरेतराध्यासः ॥ सर्वस्याधारावधिभूतचैतन्य-
परिशेषेण च न शून्यवादोपाप्तिः ॥ सत्यानृत-
संभेदावभासत्वादध्यासस्य तस्मात्पूर्व्वं पूर्व्वा
ध्यासप्रसूत एवायमुत्तरोत्तराहंकाराद्यध्यासो
बीजाङ्कुरवदनादिरविद्याध्यासश्चैक एवाना
दिः ॥ नन्वेवं सत्यं चेत्तज्ज्ञानं तेनैव द्वैताप-
त्तिरिति चेन्न ॥ तस्य स्वयमसत्यत्वात् ॥ तथा-
सति कथं प्रमेति चेत् भ्रांतोसि नितरां न हिस्व-
सत्यत्वासत्यत्वाभ्यां ज्ञानस्य प्रामाण्याप्रा-
माण्ये अपि तु विषयसत्यत्वासत्यत्वाभ्यां प्रकृ-
ते च सत्यब्रह्मविषयत्वात् सत्यत्वमिति ॥
नन्वविद्याविद्ययोः पारमार्थिकत्वापारमार्थ-
योर्भेदे सिद्धे सिद्धो भेदः ॥ अभेदे च बाध्यबा-
धकत्वानुपपत्तिः ॥ प्रपञ्चब्रह्मविभागानुपपत्ति-
श्चेतिचेन्न विद्याविद्यमानभेदाङ्गीकारात् ॥
परमार्थतस्तु ब्रह्माद्वैतमेव ॥ ननु प्रपञ्चांशे य-
थास्तु जीवेश्वरयोस्तु यदि भेदस्तर्हि सिद्धं नः स-

मीहितम् अथाभेदस्तर्हि चिदानन्दघनस्य परमात्मनो दुःखमयत्वशरीरित्वासर्वज्ञत्वादिविरोध इति चेन्न ॥ उपाधिभेदाङ्गीकारात् ॥ उपाधिभेदश्चापारमार्थिक इति न द्वैतापत्तिः ॥ नन्वेवं क्षेत्रज्ञेश्वरयोरत्यन्ताभेदे उपाधिभेदस्य च मिथ्यात्वे तत्कृतदुःखादिसम्बन्धस्यापि मिथ्यात्वात्किंनिरासार्थं श्रवणमननादिकं स्यात्॥ न हि शशविषाणनिरासार्थं किमपि मृग्यते॥ तथा च तदनुष्ठानलक्षणक्रियाव्याघात इति चेन्न ॥ अविद्यानिवृत्तेः प्रयोजनत्वात् तदुक्तं कात्यायनेन व्याकरणवाक्यकारेण सिद्धं तु निवर्त्तकत्वादिति ॥ नन्वविद्या यदि सती तदा तस्या निवृत्त्यनुपपत्तिः ॥ अथासती तदा निवृत्तैवेति यत्नानर्थक्यमिति चेन्न ॥ सदसद्विलक्षणत्वाभ्युपगमात् ॥ तथाप्यनादिभावस्य निवृत्त्यनुपपत्तिरिति चेन्न । भ्रमसंस्कारेण व्यभिचारात् ॥ व्यक्त्यनादित्वं तत्र नास्तीति चेन्न ॥ प्रागभावेन व्यभिचारात् ॥ तत्र भावत्वं

नास्तीति चेन्न स्वरूपसत्त्वस्य भावत्वस्य त-त्रापि विद्यमानत्वात् ॥ सत्तायोगित्वं भावित्वं तत्रनास्तीति चेदविद्यायामपि तन्नास्त्येव त-स्माद्यत्किञ्चिदेतत् ॥ किञ्च अनादेर्भावस्यैवा-त्मादेरभावस्याप्यत्यन्ताभावादेर्विनाशादर्शनेपि विरोधिसामग्रीसन्निपातादनादेः प्रागभावस्य यथा विनाशोङ्गीकृतः अन्यथा कारणव्यापा-रवैयर्थ्यापत्तेः ॥ एवमज्ञानेपि दीयतां दृष्टिः अन्यथा प्रमाणव्यापारवैयर्थ्यापत्तेः ॥ तस्माद-नादेः भावत्ववदनादिभावत्वमप्यप्रयोजकं प्र-योजकं तु विरोधिसामग्रीसमहितत्वमेव तथा-प्यविद्यानित्यैव द्वैतापत्तिरिति चेन्न ॥ अधि-ष्ठानब्रह्मात्मकताऽभ्युपगमात् ॥ ज्ञात एवात्माऽ-विद्यानिवृत्तिरित्युच्यते अतोऽज्ञानदशायां न तथा व्यवहारः ॥ ननु ब्रह्मसाक्षात्कारस्याविद्या-निवर्त्तकस्य ब्रह्माभिन्नत्वे सर्वदाऽविद्यानिवृ-त्त्यापत्तिः ॥ यागादिसाध्यत्वानुपपत्तिश्च ॥ ब्र-ह्माभिन्नत्वे च सिद्धो भेद इति चेन्न ॥ अभिन्न-

त्वेपि वेदान्तवाक्योत्थान्तः करणवृत्त्यभिव्यक्त-
स्यैवाविद्यानिवर्त्तकत्वात् ॥ तस्याश्च वृत्तेस्सा-
ध्यत्वेन साक्षात्कारस्यापि साध्यतोपचारः ॥ वृ-
त्तेश्च ब्रह्मणा वस्तुतोऽभेद एव भेदस्त्वविद्याविज-
जृम्भित इति एतेनेदमपास्तं वेदान्तिनां मते॥ मु-
मुक्षाप्यसती प्रवृत्तिरप्यसती मोक्षज्ञानमप्यसत्
विद्याप्यसती योगाभ्यासोप्यसन् वेदोप्यसन्ने-
व स्वर्गापूर्वादिकं तु नास्त्येवेति साधुतीर्थं
करत्वाभिमान इति सर्वेषामसद्विलक्षणत्वाङ्गी-
कारात् ॥ यावदविद्यं सत्वाभ्युपगमाच्च ॥ न-
नु सर्वंब्रह्माभिन्नमिति ते मते ॥ तथा च जा-
नीहि मम हृदि किमस्ति तव मम चाभेदादिति
चेन्न ॥ जानीयां यद्यवच्छेदभेदो न स्यात् त-
त्किमवच्छेदमङ्गीकरोषि तथा सत्यवच्छेदक-
भेदे कः प्रद्वेष इति चेन्न उभयोरपि मिथ्या-
भूतयोरेवाङ्गीकारात्कथं तर्हि मम हृदयं न जा-
नासीति चेत् ॥ अविद्याकवलनान्न जानामि ॥
अविद्यां ब्रह्मभिन्नां मन्यमानः कथं न लज्जसे

इति चेन्न परमार्थिकभेदानभ्युपगमात् तस्मा-
देकं ब्रह्मास्त्रमादाय नान्यं गणयतः क्वचिदा-
स्ते न धीरवीरस्य भङ्गः सङ्गरकेलिषु॥ ननु तथा-
पि शरीरादीनां वस्तुतो ब्रह्माभिन्नत्वात्तदज्ञान-
मेव ब्रह्मज्ञानमित्यनायाससिद्धं ब्रह्मज्ञानं न च
ततो मुक्तिरस्ति संसारस्यानुभवसिद्धत्वात् ॥
तथा च शरीरादिभिन्नत्वेनैव ब्रह्मसाक्षात्कारः
कारणं मुक्तिं प्रतीति त्वयजाद्वैतज्ञानं जातम-
पि वेदवाक्यादिति चेन्न ॥ शरीरादीनामध्य
स्तानां यदधिष्ठानं रजतादेरिव शुक्त्यादित-
ज्ज्ञानस्य मुक्तिहेतुत्वाभ्युपगमात् ॥ तज्ज्ञानं
चाधुना नास्तीति युक्तः संसारोपलम्भः॥तस्मा-
त् धीधनाबाधनायास्यास्तदा प्रज्ञां प्रयच्छथ
क्षेप्तुं चिन्तामणिं पाणिलब्धमब्धौ यदिच्छथेति
तदेवं सिद्धेऽद्वैते आत्मनानात्वव्युत्पादनं भ्रम-
मूलमेव न तु प्रमाणमूलमिति ॥ नन्वस्त्यत्र प्र-
माणं तथा हि आत्मत्वं नानावृत्ति जातित्वात्
पटत्ववत् इति चेन्न ॥ अन्योन्याश्रयात् ॥ सि-

द्धे हि नानावृत्तित्वे जातित्वसिद्धिस्तेन च तत्सि-
द्धिरिति तथा चांशतः साध्यसमो हेतुः ॥ जाति-
पदस्य च धर्ममात्रपरत्वे एतद्घटत्वादौ व्य-
भिचारः ॥ आत्मत्वं न नानावृत्ति विभुमात्रवृ-
त्तिधर्म्मत्वात् आकाशत्ववदिति प्रतिरोधश्च
किञ्च आत्मा न द्रव्यत्वव्याप्यजातिमान् विभु-
त्वादाकाशवद्द्रव्यत्वव्याप्यजातिमत्वे च विभु-
त्वे च विभुत्वभङ्गो बाधकः ॥ न च तथा सति
बन्धमोक्षसुखित्वदुःखित्वादिव्यवस्थानुपपत्तिः॥
तत्तदन्तःकरणावच्छेदेन तत्तदविद्यावच्छेदेन वा
तदुपपत्तेः ॥ तस्मान्मूर्खप्रलपितमेतत् ॥ वस्तु-
तस्तु नित्यमुक्तमेव ब्रह्म तदभिन्नो जीवोऽपि नि-
त्यमुक्त एव अविद्यादिकं तु नासीदस्ति भवि-
ष्यतीति तदुक्तं ज्ञाते द्वैतं न विद्यते प्रपञ्चोय-
दि विद्येत निवर्त्तेत न कथञ्चन बद्धो मुक्त इति व्या-
ख्या गुणतो मे न वस्तुतः॥ गुणस्य मायामूलत्वा-
न्न मे मोक्षो न बन्धनम् ॥ तस्मात्सिद्धान्तरहस्य
मविज्ञाय वेदान्तिमते दूषणाभिधानं कुतार्कि-

काणां परं शोभत इति ॥ ननु तथापि संसारावस्थायां स्वप्रकाशसुखात्मकब्रह्माभिन्नोऽहमिति कथं न प्रतीतिः ॥ ननूक्तमविद्यापिहितत्वादिति सत्यमुक्तं सैव तु नास्तीति चेन्न ॥ ब्रह्मज्ञानोत्पत्तेः पूर्वं तस्यास्स्वक्रियमाणत्वात्कुतस्तर्हि तन्निवृत्तिरिति ब्रह्माकारान्तःकरणवृत्तिभेदादिति गृहाण ॥ यद्यपि वृत्तिर्जडा तथापि तत्प्रतिबिम्बतश्चिदात्मैव तन्निवर्त्तक इत्युच्यते सा चान्तःकरणवृत्तिरविद्यां सकार्य्यां नाशयित्वा स्वयमपि नश्यति दग्धेन्धनानलवत्॥तस्माद्ब्रह्मक्षेत्रज्ञेभ्योऽभिन्नं क्षेत्रज्ञाश्च ब्रह्मणोऽभिन्ना एव भेदस्त्वविद्योपाधिकः ॥ कर्त्तृत्वभोक्तृत्वादयो जीवे सर्वज्ञत्वादयोपि परमेश्वरे मायाकल्पिता एव सकलश्रुतिस्मृतीतिहासपुराणानां तात्पर्य्यतोऽयमर्थो निष्पन्न इति तथा च वेदान्त वाक्यजन्यान्निर्विकल्पकसाक्षात्कारादेव मुक्तिः ॥ भेदज्ञानं तु सर्वथा मुक्तिप्रतिबन्धकं द्वितीयाद्वै भयं भवतीति श्रुतेः ॥ गौतमादीनामप्य-

त्रैव तात्पर्य्यं तस्मात्प्रमाणिको निषेधश्चेद्भे-
दोऽप्रामाणिकस्ततः ॥ भेदस्यापि निषिद्धत्वा-
च्छ्रुतिभङ्गोन्यथा भवेत् ॥ श्रुतिर्हि सामान्या-
कारेण द्वैतमात्राभावं प्रतिपादयति भेदोऽपि च द्वै-
तमध्ये प्रविष्ट एव अद्वैतसिद्धिर्द्वैतं न विहन्ति क
थञ्चन सत्यत्वाद्धन्तिचेन्नैव द्वैतमात्रनिषेधतः।
अद्वैतसिद्धिरपि ब्रह्मातिरिक्तानिषिध्यत एव
श्रुत्या तथाच क्वाद्वैतव्याघातः ॥ श्रुतिस्तर्हि स-
त्यत्यपि न शङ्कनीयं तस्या अपि निषेधान्न ह्यद्वै-
तश्रुतिः स्वात्मानं रक्षति तथा सति स्वविषयासि-
द्धिः प्रसज्येत ॥ आत्माभेदमजानानाः स्वतः सिद्धं
मुमुक्षवः माभूवन्नफलायासा इत्यभेदो निरू-
पितः ॥ ननु यद्यपीयता प्रबन्धेनाद्वैतरत्नं सुनि-
रूपितं भवद्भिर्दयालुभिः तथापि नास्मदीयहृ-
दये आस्पदमादधाति किमत्र करोमि शृणु शैल-
सारहृदयोऽसि तदुक्तं न्यायकुसुमाञ्जलौ इत्ये-
वं श्रुतिनीतिसंप्लवजले भूयोभिराक्षालिते येषां
नास्पदमादधासि हृदये ते शैलसाराशयाः ॥किं-

तु प्रस्तुतत्रिप्रतीपविषयोप्युच्चैर्भवच्चिन्तकाः ॥
काले कारुणिकत्वयैव कृपया ते तारणीया नराः ॥
शुद्धहृदयस्य भवति तदुक्तं तत्रैव अस्माकं तु
निसर्गसुन्दरचिराच्चेतो निमग्नं त्वयीत्यद्धान-
न्दनिधे! तथापि तरलं नाद्यापि संतृप्यते तन्ना-
थ!त्वरितं निधेहि करुणां येन त्वयैकात्मताम् या-
ते चेतसि नाम्नुयाम शतशो याम्याः पुनर्यातनाः२
अत्र चयत एवानन्दनिधिरतएव निसर्गसुन्दरः ॥
सुखरूपत्वमन्तरेण निसर्गसुन्दरत्वानुपपत्तेः ॥
न चानन्दशब्देन दुःखाभावोलक्ष्यते तथा च त-
दधिकरणमित्यर्थ इति वाच्यं तथा सति भगव-
तो निसर्गसुन्दरत्वानुपपत्तिः ॥ तस्माद्यथाश्रु-
तमेव ग्राह्यं तथा सति वेदोप्यनुगृहीतो भवति ॥
ननु कथमेवं वोढुं शक्यते ॥ यावता ब्रह्माद्वितीयं
परोक्षमसंसारि चाहं च तद्विपरीत इति तयोर-
रभेदप्रत्ययो बाधित एव वस्तुतस्तु प्रत्यय ए-
व न जायते योग्यताज्ञानाभावात् बाधविरह-
स्य तथात्वात् अन्यथा गौरश्व इत्यादावपि सा-

मानाधिकरण्यंनान्वयबाधापत्तेः ॥ न चसोयं देवदत्त इतिवदभेदप्रत्ययो युक्तिमान्तत्र हि एकस्मिन्धर्मिणि देवदत्ते तत्तेदन्ता वैशिष्ट्यं सोयमिति पदाभ्यां प्रतिपाद्यते तच्च तत्र तिष्ठत्येव नत्वेवं प्रकृते संभवति अखण्डवाक्यार्थाभ्युपगमात् तथा च विषमो दृष्टान्तः ॥ न च तत्ताविशिष्टस्येदंताविशिष्टस्य चाभेद एव वाक्येन प्रतिपाद्यते न वैशिष्ट्यमात्रम् अन्यथा भेदभ्रमनिवृत्तिर्न स्यात् ॥तस्माच्चाभेदसिद्धिस्तस्य तदेकमानत्वादिति वाच्यम्॥तथापि वाक्यार्थस्तत्र सखण्ड एव धर्म्मद्वयवैशिष्ट्यस्य तत्र सत्त्वात् ॥ यदि चैकव्यक्तिरुभाभ्यां पदाभ्यां प्रतिपाद्यते ततः पौनरुक्त्यं किञ्च नित्यज्ञानादिमति जगत्कर्त्तरीश्वरपदं तावच्छक्तं स एव तत्पदेन प्रतिपादनीयः॥तद्विलक्षणे च जीवात्मन्यत्यन्तभिन्ने जीवपदं शक्तं स एव च त्वंपदेनात्र वक्तव्यः॥ तथा च हिमवद्विन्ध्ययोरिव न कयापि वृत्त्या तयोरभेदः श्रुतिशतेनापि वक्तुं शक्यः धर्म्मिग्राहकमानेन तयो-

स्तथैव सिद्धेः ॥ न चाज्ञानोपहितो जीवस्तदनु-
पहितश्चेश्वरः ॥ यद्वा ज्ञानोपहित ईश्वरः अन्तः
करणोपहितो जीवः ॥ तथाचोपाध्यंशपरि -
त्यागेनोपहितयोरभेदबोधो नायोग्यतया परा-
भवितुं शक्यः ॥ घटाकाशो महाकाशः । धरा-
वस्थचन्द्रो दिविष्ठचन्द्र एव दर्पणस्थं मुखं ग्री-
वास्थमुखमेवेतिवदिति वाच्यम् ॥ दुःखित्व-
सर्वज्ञत्वादेः पारमार्थिकत्वात् ॥ उदाहृतस्थ-
ले च तदभावात् ॥ उक्तप्रक्रियायां मानाभावाच्च
क्षित्यादेः सकर्तृकत्वानुमानेन तादृशस्यैवेश्व-
रस्य सिद्धिः सुखाद्याश्रयत्वेनैव जीवस्य सिद्धेः
प्रत्यक्षादिना अभेदबोधकं च वाक्यं यथाकथ-
ञ्चिद्योज्यमिति ॥ अत्रोच्यते स एवायं देवदत्त
इति शब्दः ॥ स नायं सोयं न वेति च विपर्य्य स्तं
सन्दिहानं वा प्रतिप्रयुज्यते भ्रमसंशययोर्नि
वृत्त्यर्थम् तच्च प्रयोजनं कदा निर्वहति यदि देव-
दत्तस्वरूपमात्रमभिन्नं प्रतिपाद्यते ॥ तथा च त-
च्छब्दस्तत्ताभागं त्यक्त्वा व्यक्तिं लक्षयति ॥ इ-

दंशब्दोपि तथा तदनन्तरमुभाभ्यां ॥ वाक्यार्थ-
त्वेनाभिन्ना व्यक्तिः प्रतिपाद्यते ॥ तथाविशि-
ष्टस्येदानीमविद्यमानत्वेनेदन्ताग्रिशिष्टस्याभे -
दासम्भवात् ॥ मुख्यार्थबाधोऽस्त्येव ॥ एवञ्च
यदीदंपदेपि लक्षणा न स्यात् ॥ तदा विशि-
ष्टाविशिष्टयोरैक्यमसंभावितमेव न च पौनरु-
क्त्यं शक्यार्थे तदभावात् ॥ लक्ष्यार्थेत्विष्टा-
पत्तिः ॥ तदैवाभेदो वाक्यार्थस्सम्भवति ना-
न्यथा ॥ न च तत्त्वंपदयोरत्यन्तविभिन्नयो-
रत्यन्तविभिन्नयोर्द्धर्मिणोश्शक्तिग्रहः ॥ ईश्व-
रपदसमानार्थत्वात् तदः जीवपदसमानार्थ-
त्वाच्च त्वम इति वाच्यं असिद्धेस्सदेव सोम्ये-
दमग्र आसीदेकमेवाद्वितीयम् विज्ञानमानन्दं
ब्रह्म सत्यं ज्ञानमनन्तं ब्रह्मेत्यादि श्रुतिभ्य ए-
वेश्वरादिपदानां जगत्कारणे ब्रह्मणि संगति-
ग्रहः ॥ स्वर्गादिपदवत् तत्समानार्थश्च प्रकृते
तच्छब्दः ॥ यत्तु नित्यं ज्ञानादिमानेवेश्वरपदा-
र्थ इति तन्न आनन्दादेव खल्विमानि भूता-

नि जायन्त इति श्रुतिविरोधात् ॥ श्रुतिसिद्धे चार्थेऽनुमानावतारात् ॥ तदुक्तमुपासनैव क्रियते श्रवणान्तारागतेतिन अन्यथा स्रक्चन्दनादिमतिस्वर्गीति पदप्रयोगात् स्वर्गपदस्यापि तत्रैव सङ्केतग्रहापत्तेः तथा च स्वर्गकामो यजेतेत्यादिष्वपि तस्यैवार्थस्य ग्रहणे स्रक्चन्दनादिकामो यजेतेत्येवार्थः स्यात् तथा च साधु समर्थितं वैदिकत्वाभिमानित्वं स्वस्येति तस्य च ब्रह्मणोविज्ञानसुखात्मकस्याद्वितीयस्य निरपेक्षस्य कारणत्वे सर्वदा कार्योत्पत्तिः स्यादिति मायादीनां द्वारभावः कल्प्यते ॥ तदुक्तं चित्रायागः पशुफल इति श्रूयमाणेपि चित्राऽपूर्वं द्वारं पशुफलतयाक्षिप्यते तद्वच्चैतन्यात्माजगदुदयकृच्छ्रूयतेऽत्रापि पश्चान्मायादीनां भवति जगति द्वारभावः फलेऽस्मिन्नत्र च मायादीनां द्वारभावो जगद्विवर्त्तोत्पत्तौ सहकारित्वमेव न तु चित्राजन्या पूर्वमिव ब्रह्मजन्यत्वमनवस्थापत्तेः ॥ मायोत्पत्तौ मायानपेक्षणे च

कार्य्यान्तरेपि सा नापेक्ष्येत संसारस्य सादित्वा-
पत्तेश्च ॥ न च मायां तु प्रकृतिं विद्यान्मायि-
नं तु महेश्वर मिति श्रुत्या साक्षादेव मायायाः
कारणत्वं प्रतिपाद्यते कथमुच्यते कल्प्यते इतीति
वाच्यम् ॥ तस्माद्वा एतस्मादात्मन आकाशः सं-
भूत इत्यादि वाक्ये ब्रह्मणः कारणत्वप्रति-
पादनपरे श्रवणादेव कल्प्यत इत्यस्याभिधा-
नात ॥ किञ्चास्त्युभयोः कारणत्वप्रतिपादकं
वचनं विकल्पश्च वस्तुन्यसंभवी अष्टदोषदु-
ष्टश्च ॥ न च विशिष्टस्य कारणत्वाभ्युपगमेनो-
भयश्रुतिसामञ्जस्यमिति वाच्यम् ॥ यतो वि-
शिष्टं न कस्यापि वचनस्यार्थः ॥ यवमिश्रि-
तो व्रीहिरिव तस्माद्ब्रह्मण एव कारणत्वं रज्जुा
इव सर्पं प्रति माया तु शक्तिरेव तथा च श-
क्तिमद्ब्रह्म जगदुपादानकारणं भवति ॥ तथा
च जन्माद्यस्य यत इति कारणत्वं ब्रह्मलक्षणं
संगच्छते ॥ तदुक्तं वार्त्तिककृता आत्माविद्यैव-
नः शक्तिरिति ॥ अन्यैरप्युक्तं साभासमेतदुप-

जीव्यचिदद्वितीया संसारकारणमिति प्रवदन्ति धीराः ॥ साभासमेतदिति संसृतिकारणत्वे द्वारं परं भवति कारणताहृशस्तु यावद्वशोन्यदिह संसृति कारणं तद्वेदान्तवादिसमयेन मतं जडत्वात् ॥ यदाज्जडं भवति संसृतिकारणं तन्नेति स्फुटं वदति सूत्रकृदत्र यस्मात् ॥ अजडकारणभावनिबन्धनं सकलमेव जडं न तु कारणम् इति च वेदशिरस्सु विचक्षणाः कपिलपक्षनिराकरणे जगुः ॥ कारणत्वमुपलक्षणं चितो ब्रह्मणो न खलु तद्विशेषणम् इत्यपीदमुपपद्यते तदा चेतनो भवति कारणं यदा अन्यदेव यदि कारणं भवेत्कारणत्वमुपलक्षणं कथं चेतनस्य घटतेन्यगामिना वस्तुनान्यदुपलक्ष्यते यतः ॥ वहु निगद्य किमत्र वदाम्यहं शृणुत संग्रहमद्वयशासने सकलवाङ्मनसातिगताचितिः सकलवाङ्मनसव्यवहारभाक् तस्माद्ब्रह्मैव शक्तिमदुपादानकारणं ॥ ननु शक्तिमदित्यत्र शक्तिर्विशेषणमुपलक्षणं वा स्यादाद्ये विशि-

ष्टस्य कारणत्वे विशेषणस्यापि तदागतमेव ॥ अन्त्ये ब्रह्मेत्येव तदुच्यतां ॥ उपलक्षणेन विशेषणस्याभावादिति चेन्न ॥ मायोपहितस्य कारणत्वात् ॥ उपाधिश्च विशेषणोपलक्षणाभ्यां तृतीयः प्रकारः तथा हि स्वरूपान्तर्निविष्टत्वेन यावत्कार्य्यमवस्थायिभेदहेतुर्विशेषणम् ॥ यथा दण्डी प्रैषानन्वाहेत्यत्र दण्डः ॥ अत्र विशेषणत्वप्रयोजकं यद्रूपद्वयं स्वरूपान्तर्निविष्टत्वं यावत्कार्य्यमवस्थायित्वं च तदुभयाभावेन तदन्यतराभावेन च भेदहेतोरुपलक्षणतोपाधिता च द्रष्टव्या यथा चैत्रगृहस्वरूपानन्तर्गतस्य कादाचित्कस्य काकस्य तद्भेदकत्वमुपलक्षणतया यथा वा प्राभाकराणां धेनुशब्दप्रयोगे गोत्वं स्वरूपानन्तर्गतमपि यावत्कार्य्यमवस्थायित्वादुपाधिः व्यापकमित्यर्थः तदुक्तं संप्रदायविद्भिः ॥ स्वाविद्यया हि पर एव सजीवभावमागत्य संसरति लिङ्गसमागमेन ब्रह्मैव संसरति मुच्यत एतदेव दौवारिकं भवति

संसरणं तु तस्य तथा मुक्तिः पुनर्भवति चिद्-
पुषैव तस्य स्वज्ञानतः स्वमहिमप्रतिबोधतश्च ॥
स्वज्ञानान्वयिनी चिदेवभवति स्वज्ञानमस्याः
पुनर्नास्त्यन्तःकरणोपरागशवलीभावं विना यु-
क्तितः ॥ तथा ॥ पुर्य्यष्टकं भवति तस्य परस्य
मोहात्तेनान्वितस्य तु नभोमलवद्व्यलीकं दुःखं
त्रिधा भवति संसरणाभिधानं नान्यः परादधि-
करूपभृदस्ति जीवः तथा ॥ इह तावदक्षदशकं
मनसा सह वुद्धितत्वमथ वायुगणः इति लिङ्ग-
मेतदमुना पुरुषः खलु संगतो भवति जीव इति
तथा॥पुर आष्टकेन रहितस्य तव क्वचिदस्ति संसर-
णदुःखयुजा न पुराष्टकेन सहितस्य यथा क्वचिद-
स्ति दुःखविगमश्चतवे त्यादि॥तथान्यत्रापि॥जी
वोभवेत्करणं पृथगवशीकृत्य चिदिति ॥ * ॥इति
श्रीपादपद्मभगवत्पूज्यपादाचार्य्यकृतमन्त्ररा-
जदीव्यमहामन्त्रश्रीपञ्चाक्षरीभाष्यतात्पर्य्यस -
ङ्ग्रहोभाष्यप्रकाशिकाख्य ससम्पूर्णः ॥ * शुभं भू-
यात् ॥ ॥ श्री कृष्णाय नमः ॥